Sri Balamanorama Series No. 12.

॥ श्रीः ॥

# MÂLAVIKÂGNIMITRA

OF KALIDASA

With the Commentary

SARARTHADIPIKA

By

Sahṛdayatilaka Rama Pisharody



Edited by

C. Sankara Rama Sastri, M.A., B.L.

(Author of 'Fictions in The Development of the Hindu Law Texts' and 'The Wonderful Crest-Jewel')



PRINTED AND PUBLISHED BY
THE SRI BALAMANORAMA PRESS,
MYLAPORE, MADRAS.



Price Rupee 1 1/4/- 1929 [ Postage Extra

श्रीबालमनोरमा सीरीस् नं १२.

॥ श्रीः ॥

# ॥ मालविकाग्निमित्रम् ॥

महाकविकालिदासप्रणीतं नाटकम्

सहृदयतिलक श्रीरामपारकविदुषा विरचितया

सारार्थदीपिकाख्यया व्याख्यया समन्वितम् ।



मद्रास् मैलापूर् वास्तव्येन अड्वोकेट्पदमधितिष्ठता

एम् ए., बी एल्., बिरुदभाजा सि. शङ्कररामशास्त्रिणा

संशोधितम् ।



श्रीबालमनोरमामुद्रायन्त्रालये संमुद्र्य प्रकाशितम्





मूल्यं रौप्यकैकम्] १९२९ [प्रेषणव्ययः पृथक्

## PREFACE

I have great pleasure in recording my profound gratitude to Pandit Sahṛdayatilaka Rama Pisharody for his very kind permission to the inclusion of his invaluable commentary known as Sārārthadīpikā in this edition of Mālavikāgnimitra. The different readings of the text are given in the footnote in this edition. Whatever I have to say about the work, its literary merits, the author, his date etc., I propose to include in the introduction to my English translation and annotation of Mālavikāgnimitra which will follow shortly in a separate volume. The references there will be to the pages, lines etc. of this book.

C. SANKARA RAMA SASTRI,
General Editor,
Sri Balamanorama Series.

Mylapore, Madras.
15th August, 1929

# DRAMATIS PERSONÆ

सूत्रधारः
पारिपार्श्विकः
बकुलावलिका
कौमुदिका
गणदासः
राजा (अग्निमित्रः)
अमात्यः (वाहतवः)
विदूषकः (गौतमः)
कञ्चुकी (मौद्गल्यः)
हरदत्तः
धारिणी (देवी)
परिव्राजिका (कौशिकी)

मालविका
वैतालिकः (वैतालिकौ)
समाहितिका
मधुकरिका (उद्यानपालिका)
इरावती
निपुणिका
प्रतीहारी (जयसेना)
परिजनः
सारसकः
रजनिका
ज्योत्स्निका
नागरिका

## Other Persons mentioned in the Play

यज्ञसेनः
माधवसेनः
सुमतिः
पुष्पमित्रः
वसुमित्रः
वीरसेनः

मौर्यसचिवः
ध्रुवसिद्धिः
वसुलक्ष्मीः
माधविका
चन्द्रिका



॥ श्रीः ॥

# ॥ मालविकाग्निमित्रम् ॥

## प्रथमोऽङ्कः ॥

एकैश्वर्ये स्थितोऽपि प्रणतबहुफले[1] यः स्वयं कृत्तिवासाः
कान्तासंमिश्रदेहोऽप्यविषयमनसां यः परस्ताद्यतीनाम्[2] ।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं[3] वृत्तिमीशः ॥१॥

## ॥ मालविकाग्निमित्रव्याख्या सारार्थदीपिका ॥

श्रीपतिं पूर्णवेदेशं सङ्गमेशं शिवौ गुरून् ।
भक्तालयस्थां दुर्गां च भक्तचिन्तामणिं नुमः ॥
नाटकं कालिदासीयं यत्पूर्वं च रसोत्तरम् ।
सारार्थदीपिकां व्याख्यां तस्य कुर्मो यथामति ॥

अथ तत्रभवान्कविसार्वभौमः किमपि रूपकरत्नमारभमाणः शिष्टाचारमनुसरन्नान्दीरूपं मङ्गलं सूत्रधारमुखेनानुतिष्ठति—**एकेति** ॥ प्रकर्षेण भक्तिश्रद्धादिपुरस्कारेण नतानां नमस्कारं कृतवताम्, यद्वा प्रकृष्टं नतं नमस्कारो येषां तेषाम्, बहुफले बहून्यनेकानि फलान्यैहिकामुष्मिकाणि तत्तदभीष्टानि येन तस्मिन् । नानाविधफलजनके इत्यर्थः । प्रणतीति पाठे प्रणत्या हेतुना बहुफले इत्यर्थः । अनेन विशेषणेनैकैश्वर्यस्य भगवताऽनुपभोगेऽपि भक्तानां जायमानेन तत्तत्फलेन तदनुमेयमिति द्योत्यते । एकं केवलमनितरसाधारणं यदैश्वर्यमणिमादिरूपं तत्र **स्थितः** अचञ्चलतया वर्तमानः । तादृशनित्यैश्वर्यशालीत्यर्थः । यथा कुमारे— 'अणिमादिगुणोपेतम्' इत्यादि । अपीति विरोधे । एवमुत्तरत्रापि । **यः स्वयं**, न तु स्वीयः कश्चित् । **कृत्तिवासाः** चर्मवसनः । इदं कपालादिशेखरादीनामुपलक्षणम् । एकैश्वर्यानुरूपतत्तद्विशिष्टोपभोगरहित इति यावत् । भवतीति शेषः । एवमुत्तरवाक्ययोरपि बोध्यम् । तथा कान्तया संमिश्रः सर्वदा मिलितो देहो यस्य सः अपि यः । विषयेषु मनो येषां ते न भवन्तीत्यविषयमनसः विषयानासक्ताः तेषाम् । अत्र हेतुं दर्श-

---

१. प्रणतिबहुफले. २. पुरस्ताद्यतीनाम्. ३. नस्तामसीं.

यथाह—**यतीनामिति** ॥ जितेन्द्रियाणामित्यर्थः । **परस्तात्** उपरि भवति । तेषां मुख्य इत्यर्थः । तथा **अष्टाभिस्तनुभिः** पृथिव्यादिरूपाभिर्मूर्तिभिः **कृत्स्नं** सर्वं चराचरात्मकं **जगत् बिभ्रतः** दधतः पोषयतश्च अपि **यस्याभिमानः** पालकः पोषकश्चास्मीत्यहंकारः न भवति । अत्रैकैश्वर्ये सत्यपि तत्कार्यस्य तत्तद्विशिष्टोपभोगस्याभावः कृत्तिवासा इत्यनेन, सर्वदा कान्तासंनिकर्षेऽपि तत्कार्यस्य तदासङ्गस्याभावः अविषयेत्यादिना च प्रदर्शितः । जगद्धरणे सत्यपि तत्कार्यस्याभिमानस्याभावः कण्ठतश्चोक्त इति विशेषोक्त्यलङ्कारः, धैर्यलक्षणं वस्तु च व्यज्यते । किंचाद्येन वाक्येनार्थरूपे, द्वितीयेन कामरूपे, जगद्धरणस्य धर्मत्वात् तृतीयेन धर्मरूपे च पुरुषार्थे, भगवतोऽनासङ्गद्योतनेन स्वरूपभूतपरब्रह्मानन्दानुभवरूपतुरीयपुरुषार्थनिष्ठत्वं, तेन तं प्रति ब्रह्मानन्दसब्रह्मचारिरसास्वादविघ्नापनयनप्रार्थनस्यौचित्यं च द्योत्यते । **सः** एकैश्वर्यादिविशिष्टः **ईशः** परमेश्वरः अथ च स्वामी । व इति सभ्यानुद्दिश्योक्तिः । संबोधनं विना युष्मत्पदप्रयोगेण तत्कार्यस्याभिमुख्यस्य सिद्धत्वं, तेन सभ्यानां नाट्यदर्शनादरातिशयश्च गम्यते ॥ **सन्मार्गेति** ॥ सन् प्रशस्तः मार्गः । जिगमिषितदेशप्राप्तिसाधनवाचिना मार्गपदेनात्राभिलषितरसास्वादप्राप्त्युपायोऽभिनयो लक्ष्यते । तस्याभिलषितप्राप्तिसंपादकत्वं च व्यङ्ग्यम् । यद्वा 'मार्गो देशीति तद्द्वेधा कथितं नाट्यवेदिभिः । तत्र मार्गो भवेन्नाट्यं नाट्यवेदोक्तलक्षणम् ॥' इति वचनात् मार्गशब्दस्य वाच्यार्थ एवाभिनयः । तस्य प्राशस्त्यं देवानामित्यादिना वक्ष्यते । तस्यालोकनाय रसास्वादोपधायकदर्शनाय । **तामसीं वृत्तिं** तमसो वर्तनम् । तमश्शब्देनात्र बाह्यमान्तरं च रसास्वादस्य विघ्नजातं लक्ष्यते । प्रकाशप्रतिबन्धरूपस्वकार्यकरणसामर्थ्यं व्यङ्ग्यम् । **व्यपनयतु** विनाशयतु । आशिषि लोट् । यद्वा सन्मार्गो नाट्यं यस्मै फलाय सः, साद्भिर्मृग्यत इति वा सन्मार्गः । रसास्वादानन्द इत्यर्थः । तस्यालोकनाय स्फुरणाय तामसीं वृत्तिमज्ञानावरणं व्यपनयतु भञ्जयतु । अज्ञानरूपस्यावरणस्य भङ्गे सति सहृदयानां रसानन्दः स्फुरतीति रसगङ्गाधरादौ स्पष्टम् । केचित्तु सन्मार्गस्य साद्भिरनुष्ठीयमानस्य श्रेयस्साधनस्य ब्रह्मप्राप्त्युपायस्य वा आलोकनाय सम्यग्ज्ञानाय तामसीं वृत्तिमावरणविक्षेपशक्तियुक्ताया अविद्याया वृत्तिं व्यपनयतु वासनामप्युन्मूल्य प्रत्यावृत्तिशून्यां करोत्वित्यर्थ इति व्याचक्षते । तच्चिन्त्यम् । नाट्यारम्भे तदाशंसनस्यानुचितत्वात् । अत्र सन्मार्गः शोभनः पन्थाः नक्षत्रमार्गो वा तदालोकनाय तामसीं वृत्तिं तद्गतान्धकारावरणं ईशः सूर्यः अपनयत्वित्यर्थान्तरस्य तत्साम्यस्य च प्रतीत्या शब्दशक्तिमूलोपमाध्वनिः । प्राधान्येन ईशविषयकभक्तिरूपभावध्वनिश्च । अत्र श्लोके काव्यार्थश्चासूत्रितः । तथा हि— ऐश्वर्यादिविशिष्टो राजा नायकः स्पष्टमेव सूच्यते । आद्यपादेन चेश्वरोऽपि ईश्वरत्वं न प्रकाशयतीत्यर्थस्य गम्यमानत्वात् मालविकादर्शना-

(नान्द्यन्ते)

**सूत्रधारः**— (नेपथ्याभिमुखमवलोक्य) मारिष, इतस्तावत् ।

(प्रविश्य)

**पारिपार्श्विकः**—भाव, अयमस्मि ।

**सूत्रधारः**—अभिहितोऽस्मि विद्वत्परिषदा[1]—'कालिदासग्रथितवस्तु मालविकाग्निमित्रं[2] नाम नाटकमस्मिन्वसन्तोत्सवे प्रयोक्तव्यम्' इति । तदारभ्यतां संगीतम्[3] ।

---

दावप्रतिबन्धेन प्रवर्तितुं शक्तोऽपि धारिणीशङ्कया प्रभुत्वं न प्रकाशयतीति सूच्यते । केवलं धारिण्याश्चित्तं रक्षन्नित्यादिवक्ष्यमाणवाक्येषु स्पष्टमेतत् । द्वितीयपादेन धारिण्यादिमहिषीजनस्य सर्वदा संनिकर्षेऽपि तत्रानुरागस्य न्यूनता सूच्यते । साप्युत्तरत्र गम्या । तनुभिः अमात्यसैनिकादिभिः कृत्स्नं जगत् बिभ्रतः इत्यादिना वैदर्भविजयमाधवसेनरक्षणादिकं सूच्यते । नाभिमान इत्यनेन मालविकादर्शनाद्यभिनिवेशेन तत्रोदासीनता च सूचिता । सा च यदि राज्यकार्येष्वपीत्यादिवक्ष्यमाणेन गम्या । चतुर्थपादेन नायिकायाः साक्षाद्दर्शनप्रतिबन्धकापनयनायोद्यमः सूच्यते । सन्मार्गपदेन नायिकाकर्तृकाभिनयश्चेति सूच्यार्थसूचनान्मुद्रालङ्कारश्च । चतुष्पदीयं नान्दी । 'वाक्यं तु पदमुच्यते' इति वचनात् । अष्टाभिस्तनुभिरित्यनेन चन्द्रस्यापि निर्देशाच्चन्द्रनामाङ्किता च । नान्द्यादिलक्षणं दर्पणादितो बोध्यम् । वृत्तं स्रग्धरा ॥ नान्द्यन्त इत्यादेर्व्याख्यानमस्मदीयशाकुन्तलव्याख्यायां द्रष्टव्यम् ॥ **पारिपार्श्विक इति** ॥ परिपार्श्वं यथा तथा वर्तत इति पारिपार्श्विकः । सूत्रधारस्यानुचरो नटः । स च सूत्रधारेण मारिषेति, तेन च सूत्रधारो भावेति चामन्त्रणीयः । यथोक्तं— 'भावोऽनुगेन सूत्री च मारिषस्तेन सोऽपि च ॥' इति ॥ **अभिहितोऽस्मीति** ॥ विदुषां विद्यादिगुणशालिनां परिषत्सभा यद्वा विदुषी परिषत् तया अनेन सभ्यप्रशंसा कृता । कथमित्यत्राह— **कालिदासेति** ॥ कालिदासेन ग्रथितं रसानुगुण्येन योजितं वस्तु इतिवृत्तं यत्र तत् । ग्रथितपदेन पुष्पदामादिवच्चारुत्वातिशयः प्रतीयते । मालविका चाग्निमित्रश्च तावधिकृत्य कृतं मालाविकाग्निमित्रम्, 'लुबाख्यायिकाभ्यः प्रत्ययस्य बहुलम्' इत्यनेन छस्य लुविति केचित् । मालविकासहितोऽग्निमित्रः मालविकाग्निमित्रः तमधिकृत्य कृतं, 'अधिकृत्य कृते ग्रन्थे' इत्यणिति परे ॥ **अस्मिन्निति** ॥ प्रवृत्त इत्यर्थः ॥ **वसन्तोत्सव इति** ॥ 'विवाहे ग्रीष्ममाधवौ' इति वचनात् शृङ्गारानुगुणकालनिर्देशः ॥ **प्रयोक्तव्यम्** अभिनेतव्यम् ॥ इत्यभिहितोऽस्मीति संबन्धः ॥ **संगीत-**

---

१. परिषदा. २. मालविकाग्निमित्रीयं. ३. संगीतकम्.

**पारिपार्श्विकः**—मा तावत् । प्रथितयशसां [1]भाससौमिल्लककविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां[2] कथं बहुमानः ।

**सूत्रधारः**—[3]अयि, विवेक[4]श्रान्तमभिहितम् । पश्य —

**मिति** ॥ 'नृत्तं गीतं च वाद्यं च त्रयं संगीतमुच्यते' इति रत्नाकरे । अत्रेदं बोध्यम् । 'नाटकं ख्यातवृत्तं स्यात्' इत्यादिवचनान्नाटके नायकेन इतिवृत्तेन च प्रख्यातेनैव भाव्यम् । मालविकाग्निमित्रे चास्मिन्निबद्धमग्निमित्रस्य पूर्वं धारिण्यादिपरिग्रहणं वा मालविकायाश्चित्रदर्शनात्प्रभृति परिणयनपर्यन्तमितिवृत्तं वा वैदर्भविजयादिवृत्तं वा विलोक्यमानेषु पुराणेतिहासेषु विस्तरेण वर्णितं न दृश्यते । परंतु मौर्यवंशजातेष्वन्तिमं बृहद्रथनामानं राजानं राज्याद्भ्रंशयित्वा तत्र स्वपुत्रमग्निमित्रमभिषिक्तवान् बृहद्रथसेनापतिः पुष्पमित्रः, अग्निमित्रस्य च पुत्रो वसुमित्र इत्यादिवंशपरम्परामात्रं विष्णुपुराणादौ प्रतिपादितं न त्वन्यत् किमपि वृत्तम् , अतो महाकविना कस्मात्पुराणादेरिदमितिवृत्तं समुद्धृतमिति विपश्चितो निश्चिन्वन्त्विति । कालिदासेत्याद्यभिधानेन परिषदो नवीनेऽपि मालविकाग्निमित्रे बहुमतिमवगत्य तत्कारणजिज्ञासया संगीतारम्भस्य सहसा करणं निषेधति—**मा तावदिति** ॥ तदिति शेषः । सहसा सङ्गीतारम्भो मास्त्वित्यर्थः । तन्निषेधहेतुं स्वजिज्ञासां दर्शयति— **प्रथितेत्यादि** ॥ **प्रथितयशसाम्** विस्तीर्णकीर्तीनाम् । अनेन तदानीं कालिदासस्याप्रथितकीर्तित्वं द्योत्यते । प्रथितेति क्तप्रत्ययेन भासादीनां बहुमतिहेतुभूतं पुरातनत्वमपि प्रकाश्यते । भासादयः कविविशेषाः । **प्रबन्धान्** नाटकादीन् ॥ **अतिक्रम्य** परित्यज्य अवमत्य वा ॥ **वर्तमानस्य** इदानींतनस्य । इदमबहुमतौ हेतुः । अत्र कवीनां पुराणत्वनवीनत्वयोः प्रदर्शनेन तत्काव्यानामपि तत्त्वे दर्शिते ॥ **क्रियायाम्** कृतौ । तत्कृते नाटक इत्यर्थः ॥ **कथं** कुतः । किंकृत इति च पाठः ॥ **बहुमानः** ॥ परिषद इत्यर्थात्सिध्यति । परिषदो बहुमान इति च पाठः । 'नवीनकविकाव्ये चेज्जागर्ति रसशालता । पारिभद्रतरोर्मूले किं न स्यात्फाणितोदयः ॥ संस्तुतादपरिज्ञातः तस्माद्वैदेशिकः कविः । ततोऽपि तावत्स्वर्यातो याति श्रद्धेयसूक्तिताम् ॥' इत्यादिवचनादबहुमतिहेतौ नवीनत्वे सत्यपि कुतो बहुमतिर्जातेति हेतुविषयकः प्रश्नः । अबहुमतिकारणतया यन्नवत्वमुपन्यस्तं तद्विचाराभावादित्याह—**अयीति** ॥ श्रान्तः उत्सन्नः विवेको यस्मिंस्तद्विवेकश्रान्तम् । आहिताग्न्यादि-

१. भासकविपुत्रसौमल्लादीनां; धावकसौमिल्लकविपुत्रादीनां; भाससौमिल्लकविमित्रादीनां; भासकविसौमिल्लकविमिश्रादीनां; भास्करसौमिल्लकविपुत्रादीनां. २. किंकृतो बहुमानः; क्रियामिमां द्रष्टुं कथं परिषदो बहुमानः. ३. अये. ४. विवेकमस्तमभिहितम्; विवेकविश्रान्तमभिहितम्.

पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते
मूढः परप्रत्ययनेयबुद्धिः ॥ २ ॥

---

त्वात्परनिपातः ॥ **अभिहितम्** आवचार्यैव त्वयोक्तमित्यर्थः । यद्वा विवेके विवेकदशायां श्रान्तं दुर्बलं शक्तिशून्यमित्यर्थः । कुत इत्यत्राह—**पश्येत्यादि** ॥ पश्य त्वं स्वयं विचारय । किमित्यत्राह—**पुराणमिति** ॥ **सर्वं काव्यं पुराणमित्येव** पुराणत्वाद्धेतोरेव **साधु** समीचीनम् बहुमानपदमिति यावत् न भवति ॥ **च** किंच ॥ **नवमितीति** । अत्रैवकारोऽनुषज्यते । नवत्वाद्धेतोरेवेत्यर्थः । **अवद्यं** गर्ह्यमसाध्विति यावत् । सर्वस्यापि काव्यस्य पुराणत्वमात्रेण साधुत्वं, नवत्वमात्रेण असाधुत्वं च न भवतीत्यर्थः । अत्रैवकाराभ्यां व्यावर्त्ययोर्गुणदोषयोः साधुत्वासाधुत्वे प्रति हेतुत्वं पुराणत्वनवत्वयोः तन्निषेधेन द्योत्यते । साधुत्वासाधुत्वे प्रत्यव्यभिचरितयोः गुणदोषयोरेव वास्तवं हेतुत्वं, नतु व्यभिचरितयोः पुराणत्वनवत्वयोः । परंतु तयोरुपोद्बलकत्वं स्यान्नामेति भावः । तमर्थं विशदयति— **सन्त इति** ॥ यद्वा ननु पुराणत्वनवत्वयोः साधुत्वासाधुत्वे प्रत्यहेतुत्वे किंनिमित्तके ते इत्याशङ्कायामाह—सन्त इति । सन्तः विद्वांसः । 'सन्सुधीः' इत्यमरः ॥ **परीक्ष्य** गुणदोषावेव सम्यग्विचार्य । प्रत्नानूत्नत्वाचिन्ता तेषां नेति भावः ॥ **अन्यतरत्** पुराणनवीनयोरिति शेषः । पुराणनवीनयोः काव्ययोरेकमित्यर्थः । गुणाधिकमित्यर्थाल्लभ्यते ॥ **भजन्ते** बहुमन्वते । नवीनेऽपि काव्ये माधुर्यादिगुणवत्त्वे सति विदुषां बहुमतिर्भवत्येवेत्यर्थः । तर्हि मूढानामबहुमतिः स्यादित्यत्राह— **मूढ इति** ॥ परस्य अन्यस्य प्रत्ययः ज्ञानं विश्वासो वा तेन नेया नेतुं शक्या, तदधीनेति यावत्, बुद्धिर्यस्य सः । अन्यप्रमाणक इत्यर्थः । अनेन तन्निन्दया अस्माकं न हानिरिति द्योतितम् । यथोक्तं— 'प्रादुःष्यात्पण्डितानां कविवचसि कथं प्रत्नानूत्नत्वाचिन्ता विद्येरन्यद्यवद्यान्यभिजहति तथा गृह्णते स्युर्गुणाश्चेत् । अन्यस्त्वन्यप्रमाणः परमवमनुते छिद्यते तावता किं नायं रत्नस्य दोषो दृषदिति यदिदं क्षिप्रमन्धाः क्षिपन्ति ॥' इति । यथा वा नैषधे—'मदुक्तिश्चेदन्तर्मदयति' इत्यादि । यद्वा परस्य मूढादन्यस्य उत्कृष्टस्य वा विदुष इत्यर्थः । प्रत्ययेत्याद्यर्थः पूर्ववत् । विद्वद्बहुमते मूढानामपि बहुमतिः स्यादिति भावः । अत्र पुरातनप्रबन्धानपहाय माधुर्यादिगुणाधिकत्वादभिनवामपि कालिदासकृतिं सन्तो बहुमन्वत इत्यर्थेऽस्य पर्यवसानात् सामान्यनिबन्धनाप्रस्तुतप्रशंसा, चतुर्थपादे कारणनिबन्धना च । अनेन श्लोकेन प्रबन्धप्रशंसा च कृता । पूर्वपरिगृहीतं धारिण्याद्यन्तःपुरवर्गमपहाय गुणाधिकायामभिनवायां मालविकायां राज्ञः आदरातिशयश्चानेन गम्यत इति काव्यार्थसूचनं च बोध्यम् । वृत्तमुपजातिः । तदुक्तमनुमनुते—**आर्येति** ॥ मिश्रशब्दः

**पारिपार्श्विकः**—आर्यमिश्राः प्रमाणम् ।

**सूत्रधारः**—तेन हि त्वरतां भवान् ।

शिरसा प्रथमगृहीतामाज्ञामिच्छामि परिषदः कर्तुम् ।
देव्या इव धारिण्याः सेवादक्षः परिजनोऽयम् ॥ २ ॥

(इति निष्क्रान्तौ ।)

इति प्रस्तावना ।

(ततः प्रविशति चेटी ।)

**चेटी**— आणत्तम्हि देवीए धारिणीए, अइरप्पउत्तोवदेसं छलिअं णाम णट्टअं अन्तरेण कीरिसी मालविअत्ति णट्टाआरिअं अज्जगणदासं पुच्छिदुं । ता जाव संगीदसालं गच्छम्मि । (इति परिक्रामति ।)

**आज्ञप्तास्मि देव्या धारिण्या, अचिरप्रवृत्तोपदेशं छलितं नाम नाट्यमन्तरेण कीदृशी मालविकेति नाट्याचार्यमार्यगणदासं प्रष्टुम् । तद्यावत्संगीतशालां गच्छामि ।**

---

पूज्यवाची । पूज्या भवन्त इत्यर्थः । **प्रमाणं** प्रमातारः निर्णायका इत्यर्थः । भवदुक्तमनुमतमिति भावः । एतावता प्ररोचना नाम भारतीवृत्तेरङ्गमुक्तम् ॥ **तेन हीति** ॥ तर्हीत्यर्थः । तवाप्यनुमतं चेदिति भावः ॥ **त्वरतामिति** ॥ संगीतारम्भायेति शेषः । वसन्तोत्सवस्य समारब्धत्वात् वसन्तोत्सव एव परिषदाज्ञानुरोधेन मालविकाग्निमित्रप्रयोगस्य निर्वोढव्यत्वाच्च त्वरतामित्युक्तम् । त्वरतामित्यत्र तमेव हेतुं दर्शयन्नाह— **शिरसेति** ॥ अत्रान्वयः स्पष्टः । शिरसा गृहीतामित्यनेन परिषदं प्रति बहुमानातिशयः सूच्यते । प्रथममेव गृहीतामित्यनेनातः परं विलम्बोऽत्यन्तमनुचित इति च । पात्रप्रवेशं सूचयन्नुपमामाह— **देव्या इति** ॥ सेवादक्ष इत्यस्य पूर्ववाक्येऽपि संबन्धः । अत्रोपमानवाक्ये धारिण्या उपसर्जनतया कथनेन साऽस्मिन्नाटके उपनायिकेति परिजनस्य प्रधानतया कथनेन परिजनेष्वेका प्रधाननायिकेति च सूच्यते । किंच धारिण्याः परिषत्स्थानीयत्वात्तस्या दाक्षिण्योचितज्ञत्वोपशमादयः प्रकृतोपयोगिनो गुणाश्च सूच्यन्ते । अत्र प्रयोगातिशयो नामामुखाङ्गमिति बोध्यम् । वृत्तमार्या ॥ अथाङ्कमारभमाणो महाकविः अपेक्षितं परित्यज्येत्यादिवचनानुरोधेन कथासूचनार्थमादौ मिश्रविष्कम्भं नामार्थोपक्षेपकं प्रस्तौति— **तत इत्यादि** ॥ **आज्ञप्तेत्यादि** ॥ आज्ञापनप्रकारमाह— **अचिरेति** ॥ अचिरात्प्र-

---

१. छलितं; चालितं २. दाव ३. सालंदरं ४. पविसम्मि ५. अचिरप्रयुक्तोपदेशं; अचिरोपनीता छलिकनामनाट्यान्तरे कीदृशी. ६. चलितं ; छलिकं ७. नाटकमन्तरेण. ८. शालान्तरं ९. प्रविशामि.

(ततः प्रविशत्याभरणहस्ता द्वितीया चेटी ।)

**प्रथमा**—(द्वितीयां दृष्ट्वा) हला कोमुदीए कुदो दे इअं धीरदा । जं समी-वेण वि मं अदिक्कमंदी इदो दिट्ठिं ण देसि ।

सखि कौमुदिके, कुतस्त इयं धीरता । यत्समीपेनापि मामति-क्रामन्ती इतो दृष्टिं न ददासि ।

**द्वितीया**—अम्हो बउलावलिआ । सहि इदं देवीए सिप्पिसआसादो आणीदं णाअमुद्दासणाहं अङ्गुलीअअं सिणिद्धं णिज्झाअन्ती तुह उवा-लम्भे पडिदम्हि ।

अंहो बकुलावलिका । सखि, इदं देव्याः शिल्पिसकाशादा-नीतं नागमुद्रासनाथमङ्गुलीयकं स्निग्धं निध्यायन्ती तवो-पालम्भे पतितास्मि ।

---

वृत्तः आरब्धः उपदेशो यस्य तत् । अनेन तद्विषयकप्रश्नस्य योग्यता द्योत्यते । **छलितमिति** ॥ चलितं छलिकमिति च छाया दृश्यते । 'चतुर्विधाभिनयवज्जा-तिस्वरसमन्वितम् । शृङ्गाररसभूयिष्ठं सलयं छलितं विदुः ॥' इति । 'तदेतच्छलितं नाम साक्षाद्यदभिनीयते । व्यपदिश्य पुरावृत्तं स्वाभिप्रायप्रकाशकम् ॥' इति च तल्लक्षणम् । अन्तरेणेत्यव्ययमुद्दिश्येत्यर्थे । तद्विषय इत्यर्थः । **कीदृशीति** । बुद्धिकौश-लादियुक्ता न वेत्यर्थः । इति प्रष्टुमाज्ञप्तास्मीत्यन्वयः । मालविका नाम काचित् धारिण्या नियोगेन नाट्याभ्यासं कुर्वाणान्तःपुरे वसतीति कथांशोऽनेन दर्शितः । अथ मालविकायाः सौन्दर्यादिगुणातिशयं तस्यां राज्ञोऽनुरागोदयं च दर्शयितुमन्य-स्याः प्रवेशमाह— **तत इत्यादि** ॥ आभरणं हस्ते यस्याः सा । अनेनाभरणा-वलोकनकौतुकादस्याः प्रवेशानन्तरमनुक्तिरिति गम्यते । प्रथमा पुनरेतामन्यासक्त-दृष्टिमवगम्याभिमुखीकर्तुं सोपहासमाह—**हलेत्यादि** ॥ 'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः । कौमुदिकेति नाम ॥ **इयमिति** ॥ पूर्वमननुभूतेत्यर्थः ॥ **धीरता** अचाञ्चल्यम् । प्रकृतविषयेऽतिमात्रासक्तिरित्यर्थः । **यत्** यस्मात् । **समीपेन** मदधिष्ठितमार्गेण **मां** त्वदागतिं निरीक्ष्य स्थिताम् **अतिक्रामन्ती** अतीत्य गच्छन्ती । अपिशब्दस्य दृष्टिमित्यत्रापि संबन्धः । किं पुनः संभाषणादि-कमिति तदर्थः । **न ददासि** नार्पयसि । अतर्कितोपनतेन सखीदर्शनेन हृष्टाह— **अंहो इत्यादि** ॥ अंहो इत्यव्ययमानन्दद्योतकम् आश्चर्यद्योतकं च । बकुलावलिकेति नाम । 'चेटचेट्योस्तथा पुनः । वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत् ॥' इति वचनानुरोधेन बकुलावलीत्यादिनामकरणम् । दृष्टेरदाने हेतुमाह—**सखीत्यादि** ॥ इदमित्यनेनाङ्गुलीयस्य नयनाकर्षकत्वं त्वया ज्ञातुं शक्यमिति द्योत्यते । देव्या इत्यस्याङ्गुलीयकमित्यत्रान्वयः । शिल्पी सुवर्णकारः तत्सकाशादानीतमित्यनेन नूत-नत्वं द्योत्यते । तच्च सकौतुकावलोकने तच्च सख्यदर्शने तच्चोपालम्भपतने कारणम् ।

**बकुलावलिका**—( अङ्गुलीयं विलोक्य ) ठाणे खु सज्जदि दिट्ठी । इमिणा अङ्गुलीअएण उब्भिण्णकिरणकेसरेण कुसुमिदो विअ दे अग्गहत्थो पडिभादि ।

स्थाने खलु सज्जति दृष्टिः । अनेनाङ्गुलीयकेनोद्भिन्नकिरणकेसरेण कुसुमित इव तेऽग्रहस्तः प्रतिभाति ।

**कौमुदिका**—हला, कहिं पत्थिदा सि । सखि, कुत्र प्रस्थितासि ।

**बकुलावलिका**— देवीए एव्व वअणेण णट्टाअरिअं अज्जगणदासं पुच्छिदुं उवदेसग्गहणे कीरिसी मालविएत्ति ।

देव्या एव वचनेन नाट्याचार्यमार्यगणदासं प्रष्टुम्—उपदेशग्रहणे कीदृशी मालविकेति ।

**कौमुदिका**—हला, ईरिसेण वावारेण असंणिहिदा वि दिट्ठा किल सा भट्टुणा ।

सखि, ईदृशेन व्यापारेणासंनिहितापि दृष्टा किल सा भर्त्रा ।

---

अत एवास्य विशेषणस्य साभिप्रायत्वात् परिकरालङ्कारः । नागमुद्रया सर्पविषहारकमणिखचितया नागस्याकृत्या सनाथं युक्तम् । अस्य उत्तरत्रोपयोगः प्रदर्शयिष्यते । **स्निग्धं** सकौतुकम् ॥ **निध्यायन्ती** पश्यन्ती । **उपालम्भे** परिभववचने **पतितेति** ॥ अनेन श्रवणं लक्ष्यते । उपालम्भश्रवणस्यासह्यत्वातर्कितोपनतत्वादिकं व्यङ्ग्यम् । अन्यत्किञ्चित्सादरमवलोकयन् गच्छन् जनो यथा पतति तथेत्युपमाध्वनिश्चात्र वाक्ये बोध्यः । एतदवलोकने मत्कर्मकादर्शनं युक्तमित्याह—**स्थान इति** ॥ ते दृष्टिः सज्जति आसक्ता भवति । अस्मिन्निति शेषः । स्थाने खलु तद्युक्तमेव । यद्वा स्थाने योग्ये वस्तुनि । युक्तत्वमुपपादयति— **अनेनेति** ॥ उद्भिन्नाः उद्गताः किरणा एव केसरा यत्र तेन कुसुमित इव प्रतिभातीत्युत्प्रेक्षया अङ्गुलीयस्य चारुत्वातिशयः सूच्यते । किरणानां केसरैः अङ्गुलीयस्य कुसुमेन च सादृश्यप्रतीत्या हस्ताग्रस्य विटपसाम्यं प्रतीयते । प्रतिभातीति पाठः क्वचिन्न दृश्यते । अथ प्रकृतानुरोधेन पृच्छति— **हलेति** ॥ उत्तरमाह—**देव्या इति** ॥ नाट्याचार्यं प्रष्टुमित्यनेन संगीतशालां प्रतीति प्रत्याय्यते । प्रस्थितास्मीत्यनुषङ्गः । मालविकाप्रसङ्गात्तद्विषयां किंवदन्तीं श्रुतपूर्वां स्मृत्वा तत्त्वमवजिगमिषुराह— **ईदृशेनेति** ॥ ईदृशेन नाट्याभ्यासरूपेण व्यापारेण हेतुना असंनिहिता अर्थाद्देव्याः । अपीति विरोधे । सा भर्त्रा दृष्टा । किलेति वार्तायाम् । सा वार्ता सत्या किमित्यर्थादत्र शेषो बोध्यः । किल सेत्यस्य स्थाने, सा कथमिति, कथमेषेति च पाठः । स सुगमः । अत्रासंनि-

---

१. सा कहं भट्टुणा दिट्ठा. २. सा कथं भर्त्रा दृष्टा

**बकुलावलिका**—आम । सो जणो देवीए पस्सगदो चित्ते दिट्ठो ।
**आम । स जनो देव्याः पार्श्वगतश्चित्रे दृष्टः ।**

**कौमुदिका**—कहं विअ । **कथमिव ।**

**बकुलावलिका**— सुणु । चित्तसालं गदा देवी पच्चग्गवण्णराअं चित्तलेहं आआरिअस्स ओलोअन्दी चिट्ठदि । भट्टा दाव उवट्ठिदो ।
**श्रृणु । चित्रशालां गता देवी प्रत्यग्रवर्णरागां चित्रलेखामाचार्यस्यावलोकयन्ती तिष्ठति । भर्ता तावदुपस्थितः ।**

**कौमुदिका**—तदो तदो । **ततस्ततः ।**

**बकुलावलिका**—उवआराणन्दरं एक्कासणोवविट्ठेण भट्टुणा चित्तगदाए देवीए परिअणमज्झगदं आसण्णआरिणिं देक्खिअ देवी पुच्छिदा ।
**उपचारानन्तरमेकासनोपविष्टेन भर्त्रा चित्रगताया देव्याः परिजनमध्यगतामासन्नचारिणीं दृष्ट्वा देवी पृष्टा ।**

---

हितापि दृष्टेत्युक्त्या सविशेषं मालविका भर्तुः दर्शनपथाद्रक्ष्यत इति वक्ष्यमाणवचने विशेषग्रहणेन च भर्तुर्दर्शनपथाद्रक्षणमभिसंधायैव देव्या सर्वदा नाट्यशिक्षणं कर्तव्यमित्यसंनिहिता कृता मालविकेति प्रतीयते । उत्तरमाह— **आमेति** ॥ आमेत्यनुवादे । अनूदितमेव विवृणोति— **स इति** ॥ स जन इत्युक्त्या सौन्दर्यसौशील्यादिगुणातिशयेन मालविकायां बहुमानातिशयः सूच्यते । **पार्श्वगतः** समीपवर्ती । समीपे लिखित इति यावत् ॥ **दृष्ट इति** ॥ भर्त्रेत्यनुषङ्गः ॥ **कथमिवेति** ॥ इवशब्दो वाक्यालङ्कारे । देव्या रक्षितायास्तस्याः कथं चित्रेऽपि दर्शनं जातं, दृष्टायामपि तस्यां कीदृशी राज्ञो मनोवृत्तिरित्यादिप्रश्नविषयः कथंशब्दः । मालविकायाः प्रियसखी बकुलावलिका तदुत्कर्षावहामवस्थां वर्णयितुकामा तदाकर्णनकौतुकिनीं कौमुदिकामवगम्य सहर्षमाह— **श्रृण्वित्यादि** ॥ श्रृण्वित्यनेन तत्कथनेऽभिनिवेशो गम्यते ॥ **प्रत्यग्रेति** ॥ प्रत्यग्रः नवीनः वर्णानां पीतादीनां रागः रञ्जनं शोभासंपादनमिति यावत् , यस्यां ताम् । अभिनवलिखितामित्यर्थः । अनेन पूर्वमदृष्टेयं चित्ररेखेति द्योत्यते । आचार्यस्य चित्रलेखनशिल्पोपदेष्टुः संबन्धिनीम् । तत्कृतामित्यर्थः । **चित्ररेखां** चित्रपंक्तिम् । यद्वा चित्रलिपिं चित्रलेखनमित्यर्थः ॥ **तावत्** दर्शनसमय एव । कौतुकातिशयान्मध्ये पृच्छति— **तत इति** ॥ संभ्रमद्योतिका द्विरुक्तिः ॥ **उपचारेति** ॥ उपचारः भर्तरि उचितोऽभ्युत्थानादिः । एकस्मिन् देव्या आसनादभिन्ने आसने उपविष्टेनेत्यनेन देव्यां स्नेहादयो द्योत्यन्ते । चित्रगताया देव्याः परिजनोऽपि चित्रगतः तेषां मध्यं गतां तत्राप्यासन्ने देवीसमीपे

---

१. चिरं चिट्ठइ । तस्सिं अंदरे उवट्ठिदो भट्टा. २. चिरं तिष्ठति । तस्मिन्नन्तरे उपस्थितो भर्ता. ३. आसण्णदारिअं ४. दारिकां.

**कौमुदिका**—किं ति । किमिति ।

**बकुलावलिका**—देवि, अपुव्वा इअं दारिआ, तुह आसण्णा आलिहिदा किंणामहेएत्ति ।

'देवि, अपूर्वेयं दारिका, तवासन्ना आलिखिता किंनामधेया' इति ।

**कौमुदिका**—णं आकिदिविसेसे आअरो पदं करेदि । तदो तदो ।

नन्वाकृतिविशेषे आदरः पदं करोति । ततस्ततः ।

**बकुलावलिका**—तदो अवहीरिअवअणो भट्टा संकिदो देविं पुणो पुणो अणुबन्धिदुं पउत्तो । जाव देवी ण कहेइ दाव कुमारीए वसुलच्छीए आचक्खिदम्—आउत्त एसा मालविएत्ति ।

ततोऽवधीरितवचनो भर्ता शङ्कितो देवीं पुनः पुनरनुबन्द्धुं प्रवृत्तः । यावद्देवी न कथयति तावत्कुमार्या वसुलक्ष्म्याख्यातम्—'आवुत्त, एषा मालविका' इति ।

---

चरन्तीं वर्तमानां तथा लिखितामिति यावत् । कांचिदित्यर्थाल्लभ्यते । कथनमध्ये कौतुकातिशयेन पृच्छति—**किमितीति** ॥ पृष्टेत्यनुषङ्गः । राज्ञः प्रश्नप्रकारमाह—**देवीत्यादि** ॥ **अपूर्वा** नवीना **दारिका** बालिका तवासन्ना लिखितेत्यनेन परिजनान्तरेभ्योऽस्यां देव्याः अधिकवात्सल्यविषयत्वं स्वप्रश्नहेतुभूतं देवीं प्रति द्योत्यते । अत्रेयं दारिका अपूर्वेत्युक्त्या राज्ञोऽस्यां चक्षुःप्रीतिर्जातेति गम्यते । एवंरूपा कापि पूर्वं न दृष्टेति राज्ञः प्रतीत्युदयात्पूर्वमपूर्वेत्युक्तिः । तदनन्तरं तद्रूपरसास्वादनादियमित्युक्तिः । पश्चाद्वात्सल्यातिशयाद्दारिकेत्युक्तिश्चेति च प्रतीयते । अपूर्वेत्यनेन राज्ञो विस्मयाविर्भावश्च । विस्मयपूर्वको ह्यनुरागोदयः शाकुन्तलमालतीमाधवादौ दर्शितः । तवासन्नेत्यनेन इयमपि मदवरोधजनेषु मुख्या भवितुमर्हतीति राज्ञो बुद्धिश्च प्रतीयते । अपूर्वेयमित्यादिना दर्शनपथाद्रक्ष्यत इत्यन्तेन गम्यमानो मालविकागोचरो राज्ञोऽभिलाषोऽत्र नाटके बीजमित्यनुसंधेयम् । एवं राज्ञः प्रतीतिरुपपन्नेति सामान्येनाह— **नन्वित्यादि** ॥ आकृतिविशेषः विशिष्टाकृतिः पदं स्थानं । अत्राकृतिविशेष इत्यनेनापूर्वेति प्रतीतिरुपपन्नेति आदर इत्यनेन तद्रूपरसास्वादनमुपपन्नमिति च, पदं करोतीत्यनेन संबन्धं लक्षयतादरस्य फलपर्यवसायित्वरूपं स्थैर्यं च द्योत्यते ॥ **तत इति** ॥ अवधीरितं देव्या प्रत्युत्तरादानेनावज्ञातं वचनं यस्य सः । **अनुबन्द्धुं प्रवृत्तः** एतत्स्वरूपज्ञानपर्यन्तं निर्बन्धं कर्तुमारब्धवान् । अत्र वचनावधीरणं देव्या अन्तर्धापितेयमिति शङ्कायां सा च निर्बन्धे हेतुरिति काव्यलिङ्गम् ॥ **यावदित्यादि** ॥ तावदिति निर्बन्धसमय इत्यर्थाल्लभ्यते । कुमार्येत्याख्याने हेतुः । आवुत्तेत्यामन्त्रणेन देव्याः कनीयसी वसुलक्ष्मीर्नाम कन्यकेति

कौमुदिका—( सस्मितम् ) सरिसं खु बालभावस्स । अदो वरं कहेहि ।

सदृशं खलु बालभावस्य । अतः परं कथय ।

बकुलावलिका—किं अण्णं । संपदं मालविआ सविसेसं भट्टुणो दंसणपहादो रक्खीअदि ।

किमन्यत् । सांप्रतं मालविका सविशेषं भर्तुर्दर्शनपथाद्रक्ष्यते ।

कौमुदिका—हला, अणुचिट्ठ अत्तणो णिओअं । अहं वि एदं अङ्गुलीअअं देवीए उवणइस्सम् । (इति निष्क्रान्ता ।)

सखि, अनुतिष्ठात्मनो नियोगम् । अहमप्येतदङ्गुलीयकं देव्यै उपनेष्यामि ।

बकुलावलिका—(परिक्रम्यावलोक्य) एसो णट्टाअरिओ अज्जगणदासो संगीदसालादो दाणिं णिक्कमइ[1] । जाव से अत्ताणं दंसेमि ।

एष नाट्याचार्य आर्यगणदासः संगीतशालात इदानीं निष्क्रामति[2] । यावदस्य[3] आत्मानं दर्शयामि । (इति परिक्रामति ।)

ज्ञायते । 'भगिनीपतिरावुत्तः' इत्यमरः ॥ **सस्मितमिति** ॥ देव्या अन्तर्धापिताया बलात्प्रकाशनेन बालस्वभावस्मरणात् स्मितम् ॥ **सदृशमिति** ॥ इदमिति शेषः । मालविकेत्याख्यानमित्यर्थः ॥ **अतः परमिति** ॥ इतिवृत्तमिति शेषः ॥ **किमन्यदिति** ॥ अन्यत् वक्ष्यमाणादन्यत् किं न किमपि । किं तदित्यत्राह—**सांप्रतमिति** ॥ सविशेषं पूर्वापेक्षया अधिकं विलोकनपथात् दर्शनमार्गात् । पथशब्दोऽकारान्तः । 'वाटः पथश्च मार्गश्च' इति त्रिकाण्डशेषः । ऋक्पूरित्यादिना समासान्तो वा बोध्यः ॥ **रक्ष्यत इति** ॥ देव्या इति शेषः । पूर्वमियं भर्त्रा बलाद्दृष्टा चेदस्यामनुरागो भविष्यतीति शङ्कया दर्शनपथाद्रक्षिता । सांप्रतं पुनः भर्तुराकारेङ्गिताभ्यामेतद्विषयकानुरागनिर्णयेन अस्याः साक्षाद्दर्शने महानुत्साहो भविष्यतीति निश्चित्य तस्मिन् सत्यपि यथा न दर्शनपथमवतरेत्तथेयं देव्या रक्ष्यत इत्यर्थः । अथ निर्गन्तुमुद्युक्ताह—**हलेति** ॥ आत्मनः तव **नियोगं** गणदासदर्शनरूपम् । अथ गणदासं द्रष्टुं गच्छन्ती दूरत एव तं दृष्ट्वाह—**एष इति** ॥ **प्रविश्य गणदास इति** ॥ आहेति शेषः । स्वकुलविद्यायां नाट्य एव परिचयं कुर्वाणः तत्रासाधारणं पाण्डित्यमवाप्तस्तद्विद्याग्रहणादौ निपुणमतिं शिष्यमनवाप्य पूर्वं खिन्नोऽपि दैवादलोकसामान्यबुद्धिशालिनीं मालविकां नामान्तेवासिनीं लब्ध्वा संतुष्टो गणदासः स्वविद्यामेव विद्यान्तरेभ्य उत्कृष्टां मन्यमान आह—**काममित्यादि** ॥ तत्र तावदन्याभ्यो विद्याभ्यो नाट्यविद्याया विशेषं दर्शयितुं सर्वेषामपि स्वस्वकुलविद्यासु बहुमानः काममित्यादिनानूद्यते ॥ **सर्वस्येति** ॥ 'क्तस्य च

१. णिग्गच्छदि २. निर्गच्छति ३. यावदस्मा आत्मानं.

(प्रविश्य)

गणदासः—कामं खलु सर्वस्यापि कुलविद्या बहुमता । न पुनरस्माकं नाट्यं प्रति मिथ्यागौरवम् । कुतः[1] ।

देवानामिदमामनन्ति मुनयः कान्तं[2] क्रतुं चाक्षुषं[3]
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्[4] ॥ ४ ॥

वर्तमाने' इति कर्तरि षष्ठी । **कामम्** अत्यर्थम् । **बहुमता** बहुमन्यमाना । वर्तमाने क्तः । खल्विति प्रसिद्धौ । एवमनूद्य स्वविद्याया विशेषमाह—**न पुनरिति** ॥ यद्वा काममित्यकामानुमतौ । अनिच्छयानुमतिः अकामानुमतिः । अत्र हेतुं दर्शयन्नाट्यस्य विशेषमाह—**नेति** ॥ अस्माकमिति बहुवचनं सर्वेषां बहुमता नाट्यविद्या स्वकुलविद्या जातेत्यात्मनो धन्यत्वाभिमानं द्योतयति । पुनश्शब्दो नाट्यविद्याया विद्यान्तरेभ्यो विशेषद्योतकः । अस्माकं नाट्यं पुनः प्रति अस्मत्कुलविद्यायां नाट्ये तु यद्गौरवं बहुमानः तन्न मिथ्या न व्यभिचरति । कालान्तरे देशान्तरे पुरुषान्तरे वा न विपर्येतीति यावत् । अनेनान्यकुलविद्यासु बहुमानस्य व्यभिचारो द्योतितः । अत एवाकामानुमतिः । गौरवस्यामिथ्यात्वमुपपादयितुमाकाङ्क्षामुत्थापयति—**कुत इति** ॥ उपपादयति—**देवानामिति** ॥ मुनयः इदं नाट्यं देवानां क्रतुं यागं यागवत्तर्पकमिति यावत् । क्रतुत्वारोपेण नाट्यस्य वेदप्रतिपादितत्वादिकं च गम्यते । आमनन्ति कथयन्ति । आमनन्तीति शब्दशक्त्या च नाट्यस्य देवतर्पकत्वं वेदप्रतिपादितमिति द्योत्यते । मुनय इत्यनेन स्मृतिप्रसिद्धत्वं च । प्रसिद्धक्रतोः व्यतिरेकं दर्शयितुं कान्तं चाक्षुषमिति च विशेषणे । कान्तं मनोहरं नाट्यप्रयोगे तत्प्रयोक्तुः सामाजिकानां चानन्दानुभवदर्शनात् स्वरूपतोऽपि सुखरूपमित्यर्थः । प्रसिद्धक्रतुस्तु स्वरूपतो दुःखरूपः फल एव सुखरूपः । चाक्षुषं चक्षुर्ग्राह्यम् । प्रसिद्धक्रतुस्त्वप्रत्यक्षः । तस्य देवतोद्देश्यकद्रव्यत्यागात्मकत्वात् । यद्वा चाक्षुषं चक्षुस्तर्पकं प्रसिद्धक्रतुस्तु धूमादिभिश्चक्षुःपीडाकरः ॥ अथ नाट्यस्य गौरवे हेत्वन्तरं महाजनादृतत्वं दर्शयति—**रुद्रेणेति** ॥ रुद्रेण परमेश्वरेण इदं नाट्यम् उमया पार्वत्या कृतः व्यतिकरः अर्धात्मकत्वरूपः संबन्धः यत्र तस्मिन् स्वाङ्गे स्वस्य देहे द्विधा मधुरोद्धतभेदेन विभक्तं पार्वतीमये मधुरम् अन्यत्रोद्धतमिति विभागेन विन्यस्तमित्यर्थः । यथोक्तम्—'उद्दण्डताण्डवमुदञ्चितलास्यलीलां कर्तुं स्वयं युगपदेव समुत्सुकात्मा । यः कामिनीकलितकम्रतरार्धकायः सोऽयं विभाति विभुरादिनटः पुराणः ॥' इति । परमेश्वरेणाप्यादृतमिति भावः । स्वाङ्ग इत्यनेन स्वयमेव प्रयुङ्क्ते,

१. तथाहि २. शान्तं ३. चाक्षतं ४. समाराधकम्.

न तु येनकेनचिन्नाटयतीत्यर्थप्रतीत्या आदरातिशयो गम्यते । एतदर्थमेवार्धनारीश्वरत्वमप्यङ्गीकृतमिति च स्फुरति । ननु देवसंतर्पकत्वादीन्यवगच्छतां नाट्ये बहुमतिरस्तु न पुनरन्येषामिति, अतो हेत्वन्तरमप्याह— **त्रैगुण्येति** ॥ त्रयो गुणा एव त्रैगुण्यं तस्मादुद्भवो यस्य तत् । सत्त्वादयो गुणा एव स्वानुरूपेषु कर्मसु लोकान्प्रवर्तयन्तीत्यतो गुणेभ्यश्चरितस्योद्भवः । अत एव नाना अनेके रसाः शृङ्गारादयो यत्र तत् । सत्त्वादिभ्य एव शृङ्गारादीनामप्युद्भवः । लोकानां जनानां चरितम् । अत्र नाट्ये दृश्यते अतीतमपि वर्तमानमिव जनैश्चक्षुषा गृह्यते । सत्त्वरजस्तमोभिः भिन्नस्वभावानां जनानां तथाविधचरितदर्शनं नाट्ये बहुमानहेतुरिति भावः । यद्वा त्रैगुण्योद्भवं लोकचरितमत्र नानारसं दृश्यत इति संबन्धः । त्रैगुण्योद्भवमित्यनेन चरितस्य सुखदुःखमोहात्मकत्वं द्योत्यते । लोकानां रामाद्यनुकार्याणां चरितम् । नाना नानाविधाः रसाः प्रीतयो येभ्यस्तत् दृश्यते प्रेक्षकैरनुभूयते । लोकेऽनुकार्यस्य रामादेश्चरितं सुखदुःखाद्यात्मकमपि नाट्येनाभिनीयमानं सत्सुखरूपेण प्रतीयत इत्यर्थः । अत्राद्येन वाक्येन लोकोत्तीर्णानामुत्तमानां द्वितीयेन केवलसदाचारप्रमाणानां मध्यमानां, तृतीयेन विशेषज्ञानरहितानामधमानां च बहुमानहेतुः प्रदर्शित इति बोध्यम् । अतः सर्वैरपि बहुमन्यते नाट्यमित्याह—**नाट्यमिति** ॥ नाट्यमेकम् । एकमित्यनेनैतादृशमन्यन्नास्तीति दर्शितम् । सत्त्वादय एव जनानां भिन्नरुचित्वे हेतवः । तत्रापि गुणानां संकरादनेकावान्तरभेदः संभवतीत्याशयेन बहुधा भिन्नरुचेरित्युक्तम् । अपीत्यस्यात्र संबन्धः । जनस्य जनिमतः सर्वस्य समीचीनमाराधनं समाराधनं संतृप्तिकारकमित्यर्थः । बहुधेत्यस्यात्र वा संबन्धः । गीताभिनयादिबहुप्रकारेण श्रोत्रनेत्रादिप्रीतिजनकत्वात् बहुप्रकारेणेत्यर्थः । तृप्तिकरं हि वस्तु सर्वैरादृतं भवतीति तृप्तिकरत्वोक्त्या नाट्यं सर्वैरपि बहुमन्यत इत्यर्थो दर्शितः । अतो नाट्यं प्रति गौरवस्य क्वचित्कदाचिदपि न व्यभिचार इति पूर्वेण संबन्धः । सर्वैरपि बहुमन्यमाना नाट्यविद्यास्माकं कुलविद्या जाता । अहो मम भागधेयमिति गणदासस्य हर्षातिशयोऽत्र प्रधानतया व्यज्यते । आद्ये पादेऽधिकाभेदरूपकं, द्वितीये स्वाङ्गे द्विधा विभक्तमित्यनेन तत्कारणस्यादरस्य प्रतिपादनात् कार्यनिबन्धनाप्रस्तुतप्रशंसा, परमेश्वरादृतत्वप्रदर्शनेनान्येषामादरस्य कैमुत्येन प्रतीत्यार्थापत्तिध्वनिश्च, चतुर्थपादे तृप्तिकरत्वोक्त्या आदरप्रतीतेश्च अप्रस्तुतप्रशंसा, वाक्यत्रयार्थस्यान्त्यवाक्यार्थोपपादकत्वात् काव्यलिङ्गं चालङ्कारः । इदंशब्दैर्नाटयशब्देन च प्रतिवाक्यं नाटयस्य निर्देशो वक्तुस्तत्रादरातिशयद्योतनार्थः । इदंशब्दैर्नाट्यस्यैव परामर्श इति स्फुटीकर्तुमन्त्यपादे नाट्यपदं प्रयुक्तमिति च ज्ञेयम् । अनेनात्र भावी मालविकानाट्यप्रयोगः तेन भाविनी गणदासस्य बहुमतिश्च कविना सूच्यते । वृत्तं शार्दूलविक्रीडितम् । बकुलावलिका वन्दनानन्तरं देवीवचनं निवेदयति—**आ-**

**बकुलावलिका**—(उपसृत्य) अज्ज वन्दामि । आर्य वन्दे ।

**गणदासः**—भद्रे चिरं जीव ।

**बकुलावलिका**—अज्ज, देवी पुच्छदि---अवि उवदेसग्गहणे णादिकिलेसेदि वो सिस्सा मालविअत्ति ।

आर्य, देवी पृच्छति—'अप्युपदेशग्रहणे नातिक्लेशयति वः शिष्या मालविका' इति ।

**गणदासः**—भद्रे, विज्ञाप्यतां देवी— 'परमनिपुणा मेधाविनी च' इति । किं बहुना ।

यद्यत्प्रयोगविषये भाविकमुपदिश्यते मया तस्यै ।
तत्तद्विशेषकरणात्प्रत्युपदिशतीव मे बाला ॥ ५ ॥

**बकुलावलिका**—(आत्मगतम् ) इरावदिं अदिक्कमंदिं विअ पेक्खामि । (प्रकाशम् ) किदत्था दाणिं वो सिस्सा, जस्सिं गुरुअणो एव्वं तुस्सदि ।

---

**र्येति** ॥ किं पृच्छतीत्यत्राह—**अपीत्यादि** ॥ अपीति प्रश्ने । उपदेशः उपदिष्टार्थः अभिनयः तस्य ग्रहणे । ग्रहणपदं प्रयोगस्याप्युपलक्षणम् । शिष्यजनस्य मन्दबुद्धित्वे नैपुण्याभावे च गुरूणामतीव क्लेशो जायत इति प्रसिद्ध्या नातिक्लेशयतीति प्रश्नः ॥ **परमेति** ॥ परमनिपुणेत्यत्र प्रयोग इति, मेधाविनीत्यत्र ग्रहण इति च शेषः ॥ शिष्या मालविकेत्यस्यानुषङ्गः ॥ **किं बहुनेति** ॥ बहुना उक्तेन किं, किं फलं, न किमपीत्यर्थः । संक्षेपतः सारं ब्रवीमीति भावः । नाटयस्य प्रयोगप्रधानत्वात् ग्रहणमन्तरा साधुप्रयोगस्यासंभवाच्च विशेषतः प्रयोगे नैपुण्यातिशयमाह—**यद्यदिति** ॥ प्रयोग एव विषयः तस्मिन् । प्रयोगं विषयीकृत्येत्यर्थः । यद्यद्भाविकम् । 'सुखदु खादिभिर्भावैर्भावस्तद्भावभावनम्' इति लक्षितो भावः तेन निर्वृत्तं भाविकं सात्त्विकं नृत्यमित्यर्थः । इदं नृत्यान्तराणामुपलक्षणं प्राधान्यादुक्तम् । **मया तस्यै** मालविकायै **उपदिश्यते** शिक्ष्यते ॥ **तत्तदिति** ॥ सेति शेषः । बाला सा तत्तदुपदिष्टं तत्तद्भाविकं विशेषः शिक्षितापेक्षया अधिकः तस्य करणात् एतदेवं प्रयोक्तव्यमित्युपदिष्टस्य नाटयस्य प्रयोगे स्वाभाविकनैपुण्यातिशयेनानुपदिष्टस्यापि विशेषस्य प्रकाशनाद्धेतोरित्यर्थः । **मे** मह्यं **प्रत्युपदिशतीव** सविशेषं प्रतिशिक्षयतीवेत्युत्प्रेक्षा । यद्वा तत्तद्विशेषेत्याद्येकपदम् । प्रत्युपदिशतीत्यस्य तत्तद्विशेषानिति शेषः । विशेषज्ञो ह्यविशेषज्ञं बोधयतीत्युत्प्रेक्षया मालविकायाः स्वस्माद्विशेषज्ञत्वं तया प्रयुक्तस्य विशेषस्य ग्रहणे स्वस्यादरातिशयश्च द्योत्यते । अत एव वात्सल्यातिशयद्योतनार्था बालेत्युक्तिः ।

---

१. णादिकीलिस्सदि. २. नातिक्लिश्नाति. ३. आदक्रन्तं.

**इरावतीं अतिक्रामन्तीमिव पश्यामि। कृतार्थेदानीं वः शिष्या, यस्यां गुरुजन एवं तुष्यति ।**

**गणदासः**—भद्रे, तद्विधानामसुलभत्वात्पृच्छामि । कुतस्तत्पात्रमायातम् ।

**बकुलावलिका**—अत्थि देवीए वण्णावरो भादा वीरसेणो णाम भट्टुणा णम्मदातीरे अन्दवालदुग्गे ठाविदो । तेण सिप्पाहिआरे जोग्गा इअं दारिअत्ति भणिअ भइणीए देवीए उआअणं पेसिदा ।

**अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम भर्त्रा नर्मदातीरेऽन्तपालदुर्गे स्थापितः । तेन शिल्पाधिकारे योग्येयं दारिकेति भणित्वा भगिन्यै देव्यै उपायनं प्रेषिता ।**

**गणदासः**—(स्वगतम्) आकृतिविनयप्रत्ययादेनामनूनवस्तुकां संभा-

---

वृत्तमार्या ॥ प्रतिकृतिदर्शनेनाप्यनुरागजनकं सौन्दर्यातिशयं नाट्यप्रयोगे एवंविधनैपुण्यातिशयं च प्रियसख्या मालविकायाः स्मृत्वा हर्षाकुला स्वयमाह—**इरावतीमिति** ॥ एतामिति शेषः । इरावती नाम काचिन्नाट्यप्रयोगादिशिल्पनिपुणा राज्ञो भोगिनीति स्फुटीभविष्यति । तामतिक्रामन्तीं शिल्पे राज्ञो दयितात्वे च विषयेऽतिशयानाम् । अतिक्रमणस्यारब्धत्वादपरिसमाप्तत्वाच्च वर्तमाननिर्देशः । एतदुत्तरत्र स्फुटीभविष्यति । इव पश्यामि संभावयामि । अपायशङ्काद्योतक इवशब्दः । प्रकाशमाह—**कृतार्थेति** ॥ कृतार्थत्वे हेतुः—**यस्यामिति** ॥ यस्यां विषये । गुरुजनपरितोषे हि शिष्यस्य कृतार्थता । एवंविधाया मालविकायाः धारिणीसंनिधावागमनप्रकारं बोधयितुं कविर्गणदासप्रश्नमुपन्यस्यति—**तद्विधानामिति** ॥ तद्विधानां मालविकासदृशानाम् । पात्राणामिति शेषः । **कुतः** कस्माद्देशात्पुरुषाच्च **तत्** मालविकारूपम् **पात्रं** लोकोत्तरगुणविशिष्टं वस्तु । 'योग्यभाजनयोः पात्रम्' इत्यमरः ॥ **आयातं** दैवादुपनतम् । एतदागमनापादानत्वयोग्यः कश्चिद्देशः पुरुषो वा न मे प्रतिभातीति भावः ॥ **अस्तीत्यादि** ॥ **वर्णेन** जात्या अवरो न्यूनः । देवीपितुः वैश्यायां शूद्रायां वा भार्यायां जात **इति** भावः । सः वीरसेनः नर्मदायाः कूले तीरे यत् अन्तपालस्य राष्ट्रसीमापालकस्य दुर्गं तत्स्थित्यर्थं निर्मितं दुर्गमित्यर्थः । तस्मिन् स्थापितः । अनेन राज्ञो वैदर्भं प्रति समरसन्नाहः सूच्यते । वक्ष्यति च पूर्वसंकल्पितेत्यादि ॥ **तेन** वीरसेनेन । 'शिल्पं कर्म कलादिकम्' इत्यमरः । शिल्पे योऽधिकारः नियोगः तस्मिन् योग्या । उपायनमित्यनेनैवंविधस्य पात्रस्य देव्या अभीप्सितत्वं दुर्लभत्वं च सूच्यते ॥ **आकृतीत्यादि** ॥ आकृतौ विनये च यः प्रत्ययः । यद्वा ताभ्यां प्रत्ययः

---

१. अतिक्रान्तां २. कुतो देव्या तत्पात्रमानीतम् ३. आकृतिविशेषप्रत्ययात्

वयामि । (प्रकाशम्) भद्रे, मयापि यशस्विना भवितव्यम्[1]। पश्य—

पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥ ६ ॥

**बकुलावलिका**—अह[2] कहिं वो सिस्सा। अथ[3] कुत्र वः शिष्या।

**गणदासः**—इदानीमेव पञ्चाङ्गाभिनयमुपदिश्य मया विश्रम्यतामित्यभिहिता दीर्घिकावलोकनगवाक्षगता प्रवातमासेवमाना तिष्ठति।

---

विश्वासः। तस्मात्। एवंविधाकृतिविनयौ ह्यनभिजने जने न दृश्येते इति विश्वासादित्यर्थः॥ **एनां** मालविकाम्। अनूनमुत्कृष्टं वस्तु अभिजनः यस्यास्तां संभावयामि। वीरसेनः कस्माच्चिदन्यस्मादेनां लब्धवान् भवेदित्यभिसंधिरनेन प्रकाशितः। तस्या गुणातिशयेन स्वस्याप्यधिकं यशो भवेदित्याह—**मयापीति**॥ **मयापि** तद्गुरुणा मयापि न केवलं तया **यशस्विना** प्रशस्तबहुयशोयुक्तेन। उक्तमर्थं सामान्यमुखेन साधयति—**पात्रेति**॥ **पात्रविशेष** विशिष्टे पात्रे **न्यस्तं** निहितमिति हेतुगर्भम्। सच्छिष्ये उपदिष्टमिति यावत्॥ **आधातुः** विन्यासकर्तुः। उपदेष्टुरिति यावत्॥ **शिल्पं** कलाविद्यादि॥ **गुणान्तरं** गुणातिशयं **व्रजति** प्राप्नोति। पात्रवैशिष्ट्येनेति भावः। पात्रस्य वैशिष्ट्येन कथं तन्निहितस्य शिल्पस्य गुणोत्कर्ष इति शङ्कां परिजिहीर्षुरुपमामाह—**जलमिति**॥ समुद्रे शुक्तिः समुद्रशुक्तिः तस्यां न्यस्तमित्यनुषङ्गः। पयोदस्य जलं मुक्ताफलतामिव व्रजतीति संबन्धः। अत्राचार्यशिल्पविशिष्टपात्रगुणान्तराणां चतुर्णां पयोदजलशुक्तिमुक्ताफलत्वानां च बिम्बप्रतिबिम्बभावेन निर्देशादुपमेयानां क्रमेण विद्याबाहुल्यादिकं सर्वजनतर्पकत्वं स्वनिधानमात्रेणावस्थान्तरप्रापकत्वमत्यन्तशोभावहत्वं च व्यज्यते। अत्र पूर्वार्धे सामान्यनिबन्धनाप्रस्तुतप्रशंसा। मालविकायां गणदासेन समर्पिताया नाट्यविद्याया मालविकावैशिष्ट्येन गुणातिशयप्राप्तिरूपार्थस्य प्रतिपादनात्, तेन च मालविकाया लोकोत्तरयशःप्राप्तिरूपार्थश्च प्रत्याय्यत इति कारणनिबन्धनाप्रस्तुतप्रशंसा च। यतो मालविकया यशस्विन्या भाव्यम् अतो मयापि तद्गुरुणा यशस्विना भवितव्यमिति पूर्वापरसंबन्धः। अत्र मतिर्भावः। वृत्तमार्या॥ मालविकाया गुणातिशयश्रवणात् विशेषतस्तां द्रष्टुमुत्सुकाह—**अथेति**॥ अथेति प्रश्ने। अथ किमिति पाठे त्वथ किमिति पूर्वोक्तानुमतौ। कुत्रेत्यादिप्रश्नः॥ **इदानीमिति**॥ शिष्येत्यनुषङ्गः॥ **पञ्चाङ्गेति**॥ "कराभ्यां चरणाभ्यां च शिरसा चाभिनीयते। यत्र वस्तुनि विज्ञेयः पञ्चाङ्गाभिनयो हि सः॥" इति। 'चित्ताक्षिभ्रूहस्तपादैरङ्गैश्चेष्टादिसाम्यतः। पात्राद्यवस्थाकरणं पञ्चाङ्गोऽभिनयो मतः॥' इति च तल्लक्षणम्। दीर्घिकावलोक्यतेऽनेनेति दीर्घिकावलोकनः।

---

१. यतः २. अहइं अह कहिं वो सिस्सा ३. अथकिं अथ कुत्र वः शिष्या।

**बकुलावलिका**—तेण हि अणुजाणादु आआरिओ । जाव से अज्जस्स परिदोसणिवेदणेण ऊसाहं वड्ढेमि ।

तेन[2] ह्यनुजानातु मामाचार्यः । यावदस्या आर्यस्य परितोषनिवेदनेनोत्साहं वर्धयामि ।

**गणदासः**—दृश्यतां सखी । अहमपि लब्धक्षणः स्वगृहं गच्छामि ।

(इति निष्क्रान्तौ ।)

**इति मिश्रविष्कम्भः ।**

(ततः प्रविशत्येकान्तस्थितपरिजनो मन्त्रिणा लेखहस्तेनान्वास्यमानो राजा ।)

**राजा**— (अनुवाचितलेखममात्यं विलोक्य) वाहतव, किं स प्रतिपद्यते वैदर्भः ।

---

करणे ल्युट् । त गवाक्षं वातायनं गता । प्रकृष्टः सौरभ्यादिगुणविशिष्टः वातः प्रवातः तम् ॥ **तेन हीति** ॥ उत्साहं यावद्वर्धयामीति संबन्धः । गुरुजनपरितोषज्ञानं हि शिष्यस्योत्साहवर्धकम् ॥ **दृश्यतामिति** ॥ लब्धः क्षणः निर्व्यापारस्थितिः येन सः । उपदेशरूपव्यापारस्य तदानीमवसितत्वादिति भावः ॥ **मिश्रविष्कम्भ इति** ॥ वृत्तवर्तिष्यमाणानामित्यादि तल्लक्षणं बोध्यम् । राज्ञो मालविकाया-मनुरागजननादिको वृत्तकथाभागः तच्चरिताभिनयादिको वर्तिष्यमाण इति विवेकः ॥

एवं मालविकाया नायिकाया धारिणीसमुपस्थिति, नाट्यविद्याशिक्षणं, सौन्दर्यादिगुणातिशयं, राज्ञो दर्शनपथाद्धारिणीकृतं रक्षणं, बलाच्चित्रदर्शनेन राज्ञश्चित्तासङ्गं, प्रज्ञाविनयाकृत्यादिगुणातिशयेन मालविका विशिष्टाभिजनेति संभावनं, तस्या वीरसेनादागतिं च दर्शयित्वा राज्ञो नायकस्य संकल्पाद्यवस्थाः दर्शयिष्यन्नङ्कमारभते महाकविः **—तत इत्यादिना** ॥ तत्रादौ मालविकाया वैदर्भकुलसंभूतिं पूर्वमेव राज्ञा प्रार्थितत्वं चावगमयितुं वैदर्भवाचिकप्रकरणारम्भः । अत्रापि राज्ञश्चित्तासङ्गो रसावहितचेतसा महाकविना सूच्यते—**एकान्तेति** ॥ एकान्ते राजसमीपव्यतिरिक्तैकस्थाने स्थिताः परिजनाः यस्येत्यनेन मन्त्रारम्भः सूच्यते । अन्वास्यमानः पश्चादुपवेशनेन सेव्यमानः ॥ **अनुवाचितेति** ॥ अनुशब्देन सकृद्वाचने राज्ञा तस्याश्रवणं तेन मालविकागतमनस्कतया तद्दर्शनोपायचिन्तादिना राज्ञश्चित्तस्य व्याकुलत्वं च द्योत्यते । अत एव लेखतात्पर्यमात्रं पृच्छति—**वाहतवेत्यादि** ॥ वाहतवेत्यमात्यस्य नाम । **सः** पूर्वमस्माभिरादिष्टः । **किं प्रतिपद्यते** अस्मदादेशाङ्गीकारानङ्गीकारयोः किं कर्तव्यतया मन्यते । भावज्ञानकुशलोऽमात्यः स्वामिनश्चित्तस्य विषयान्तरव्यासङ्गमाशङ्क्य तन्निरस्य वैदर्भाभियोगे प्रोत्साहनाय

---

१. तेण हि पुणो अणुजाणादु मं अज्जो २. तेन हि पुनरनुजानातु मामार्यः ।

**अमात्यः**—देव, आत्मविनाशम् ।

**राजा**—निदेश[1]मिदानीं श्रोतुमिच्छामि ।

**अमात्यः**—इदमिदानीमनेन प्रतिलिखितम् । "पूज्येनाहमादिष्टः—'पितृव्यपुत्रो भवतः कुमारो माधवसेनः प्रतिश्रुतसंबन्धो ममोपान्तिकमुपसर्पन्नन्तरा त्वदीयेनान्तपालेनावस्कन्द्य गृहीतः । स त्वया मदपेक्षया सकलत्रसोदर्यो मोक्तव्यः' इति । त[2]न्न वो न विदितम् । यत्तुल्याभिजनेषु भूमिधरेषु राज्ञां प्र[3]वृत्तिः । अतोऽत्र मध्यस्थः पूज्यो भवितुमर्हति । सोदर्या पुनरस्य ग्रहणविप्लवे विनष्टा । तदन्वेषणाय प्रय-

तदनुगुणं प्रतिवक्ति—**देवेति** ॥ समुदाचाररूपया देवेति संबुद्ध्या राज्ञो विजिगीषुतास्वभावश्च द्योत्यते । आत्मविनाशमित्यनेन तत्कारणमादेशानङ्गीकरणं लक्ष्यते । कारणस्य कार्याव्यभिचारित्वं व्यङ्ग्यम् । स प्रतिपद्यत इत्यस्यानुषङ्गः । भवान्विजिगीषुः, वैदर्भश्चापकारी, अतोऽस्य समुन्मूलनायोद्यमः कार्य इति स्वाभिप्रायश्चानेनोद्घाटितः । तदाकर्णनेन किंचित्कुपित आह—**निदेशमिति** ॥ 'निदेशः शासनम्' इत्यमरः । निदेशमित्युक्तिः गम्भीराक्षेपरूपा स्वस्य वैदर्भजयाभिनिवेशं द्योतयति । अत एव शुश्रूषा । कथयास्य निदेशमिति च पाठः ॥ निर्देशमिति अपपाठः ॥ **इदमित्यादि** ॥ इदं वक्ष्यमाणं प्रतिलिखितमित्यनेन पूर्वं वैदर्भं प्रति लेखनं प्रेषितमिति गम्यते । पूज्येनेत्यादिना तदनुवादः । पूज्यशब्दोऽत्राभिमतवाची । पितृव्येत्यादिस्तदादेशप्रकारः ॥ **भवतः पितृव्येति** ॥ भवच्छब्दोऽत्र वैदर्भवाची । प्रतिश्रुतः संबन्धः कन्यादानेन संपादनीयः सुहृत्त्वरूपो येन सः । **अवस्कन्द्य** परिभूय । अन्तपालेत्यनेन मालविकाया अग्निमित्रान्तपालवीरसेनकरप्राप्तेरुपपत्तिर्दर्शिता । **मदपेक्षया** मदनुरोधेन । सकलत्रसोदर्य इत्यनेन सोदरीदानं प्रतिश्रुतमिति गम्यते ॥ **तन्नेत्यादि** ॥ वैदर्भस्योत्तरम् । **तुल्याभिजनेषु** तुल्यवंशेषु । **भूमिधरेषु** राजसु । **प्रवृत्तिः** निमित्तवशादनुकूला प्रतिकूला वा प्रवृत्तिरित्यर्थः । भवति यत् तद्वः न विदितं न, विदितमेवेत्यर्थः । व इति बहुमानगर्भमभिधानम् । विदितमिति वर्तमाने क्तः । 'क्तस्य च वर्तमाने' इति व इति षष्ठी । प्रवृत्तिरीदृगिति क्वचित्पाठः । **अत्र** अस्यां प्रवृत्तौ ॥ **मध्यस्थो भवितुमर्हतीति** ॥ भवतो मध्यस्थतैव युक्तेत्यर्थः । निर्बन्धो न युक्त इति भावः ॥ **पुनरिति** ॥ सोदर्यामोचने तव निर्बन्धो न्याय्यः । मयाप्येतत्करणीयमिति विशेषं पुनःशब्दो द्योतयति । ग्रहणरूपो विप्लवः संमर्दः तस्मिन् ॥ **विनष्टा** विशेषणादर्शनं गता । मदीयान्तपालेन सा न गृहीतेति भावः ॥ **प्रयतिष्ये** प्रकर्षेण यत्नं करिष्ये । यथा सा दृश्येत दृष्टा चेद्भवत्समीपं नेष्यते च तथा यत्नं करिष्यामीत्यर्थः ।

१. संदेश २. एतन्ननु वो विदितम् ३. प्रवृत्तिरीदृक्

तिष्ये । अथ अवश्यमेव माधवसेनो मया पूज्येन मोचयितव्यः, श्रूयतामभिसंधिः—

**मौर्यसचिवं विमुञ्चति यदि पूज्यः संयतं मम स्यालम् ।**
**मोक्ता माधवसेनं ततोऽहमपि बन्धनात्सद्यः ॥ ७ ॥** इति ।

राजा—(सरोषम्) कथं कार्यविनिमयेन मयि व्यवहरत्यनात्मज्ञः । वाहतव, प्रकृत्यमित्रः प्रतिकूलकारी च मे वैदर्भः । तद्यातव्यपक्षे स्थितस्य पूर्वसंकल्पितसमुन्मूलनाय वीरसेनप्रमुखं दण्डचक्रमाज्ञापय ।

---

अत्र व इति पूज्य इति पदाभ्यां सामोपायः, तुल्याभिजनेष्वित्यादिना भेदः, सोदर्येत्यादि प्रयतिष्ये इत्यन्तेन दानं चेत्युपायत्रयं वैदर्भेण प्रयुक्तमिति गम्यते । तुल्याभिजनेष्वित्यादिवाक्येन माधवसेनं न मोक्ष्यामीति सोदर्येत्यादिना च सोदर्या लाभमुद्दिश्य माधवसेनमोचने नाभिनिवेष्टव्यमिति चार्थः प्रकाशितः । पक्षान्तरमाह— **अथेति** ॥ **मया** प्रयोज्येन **पूज्येन** प्रयोजकेन । अथेति यदीत्यर्थे । तर्हीति शेषः । **अभिसन्धिः** तात्पर्यम् । यद्वा अभिमुखः सन्धिः अभिसन्धिः पणः । यदि भवानेवं कुर्यात्तदाऽहमेवं कुर्यामिति परकार्यानुष्ठाने यत्स्वकार्यकरणं निमित्ततया निर्दिश्यते तदित्यर्थः । स्वाभिसन्धिमाह—**मौर्येति** ॥ **पूज्यो** भवान् **संयतं** भवता निगृह्य बद्धम् **स्यालं** पत्न्याः भ्रातरम् । स्यालमित्यनेन तन्मोचनस्यावश्यकत्वं द्योत्यते । मौर्यनामानं सचिवम् । आर्यसचिवमिति च पाठः । विमुञ्चति यदि ततस्तर्हि माधवसेनमपीति संबन्धः । स्यालमित्यत्रापि संबध्यते । स्यालत्वेन संकल्पितमित्यर्थः ॥ **मोक्तेति** ॥ तृन्नन्तम् । अनेन वाक्येन वैदर्भस्याग्निमित्रे स्वतुल्यत्वबुद्धिरेवेति प्रतीयते । तदाकर्णनेन क्रोधाविष्ट आह—**कथमिति** ॥ अत्यन्तासङ्गतवाक्याकर्णनजनितक्रोधावेशद्योतकम् । वाक्यासङ्गतत्वं दर्शयन्नाह— **कार्येति** ॥ विनिमयः पूर्वोक्ताभिसंधिरूपः । तेनेति विशेषणे तृतीया । व्यवहरतीत्यनेन संबन्धः । **मयि** प्रभुशक्त्यादिना उत्कृष्टतमे मयि । कार्यविनिमयेन व्यवहारः समान एवोचितः न तूत्कृष्ट इत्यतोऽस्य व्यवहारस्यात्यन्तासङ्गतत्वं काकुसहायेन मयीत्यनेन द्योत्यते । एवं व्यवहारे हेतुमाक्षेपगर्भमाह—**अनात्मज्ञ इति** ॥ आत्मानमात्मशक्त्यादिकं जानातीत्यात्मज्ञः स न भवतीत्यनात्मज्ञः । स इति शेषः । अनेन वैदर्भोन्मूलनं मया निश्चितमित्यर्थो राज्ञा द्योतितः । तत्रामात्यं प्रेरयति— **वाहतवेत्यादि** ॥ प्रकृत्यमित्रः निसर्गशत्रुः, विषयानन्तरत्वादिति भावः ॥ **प्रतिकूलकारीति** ॥ ताच्छील्ये णिनिः । यातव्यानां युद्धार्थमभिगन्तव्यानां पक्षे स्थितस्य । अस्येति शेषः । पूर्वसंकल्पितं यत्समुन्मूलनं तस्मै । दण्डार्थं चक्रं सैन्यं दण्डचक्रं यद्वा दण्डानां सैन्यानां चक्रं समूहम् ॥ **आज्ञापयेति** ॥

---

१. माधवसेनस्ततो मया.

**अमात्यः**—यदादिशति[1] देवः ।

**राजा**—अथवा किं भवान्मन्यते ।

**अमात्यः**—शास्त्रदृष्टमाह देवः । कुतः ।

अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात् ।
नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्तुम् ॥ ८ ॥

**राजा**—तेन ह्यवितथं तन्त्रकारवचनम् । इदमेव वचनं[2] निमित्तमादाय समुद्योजय तां सेनाम् ।

**अमात्यः**—तथा । (इति निष्क्रान्तः ।)

---

प्राप्तकाले लोट् । विधिश्च तदर्थः । वीरसेनशब्देन शत्रून्मूलनसामर्थ्यं गम्यते । सः प्रधानं यत्र तत् ॥ **यदादिशतीति** ॥ तत्करिष्यामीति शेषः । क्रोधवशादेवमुक्त्वा पुनर्विचिन्त्याह— **अथवेति** ॥ पक्षान्तरद्योतकेनाथवेत्यनेन अमात्यमतेरपरिज्ञानात्स्वयं निश्चितेऽर्थे स्वस्यापरितोषः सूच्यते । तेनामात्ये बहुमानातिशयश्च । अथामात्यः स्वामिनि बहुमानादिकं दर्शयन्नाह—**शास्त्रेति** ॥ शास्त्रेण दृष्टं ज्ञातं शास्त्रदृष्टम् । तदेवाह—**अचिरेति** ॥ अचिरमधिष्ठितमध्यासितं राज्यं येन सः । अचिरेण प्राप्तराज्य इत्यर्थः । शत्रुः प्रकृतिषु अमात्यादिवर्गेषु । रूढं दृढं संजातं न भवतीत्यरूढं मूलं यस्य तत्त्वात् । रूढमूलत्वस्याभावः अरूढमूलत्वं तस्मादिति वा । मूलशब्दार्थश्चात्र राजप्रतिष्ठाकारणभूतः प्रकृतिगतो विश्वासानुरागादिः । अरञ्जितप्रकृतिकत्वादित्यर्थः । नवं यत्संरोपणं तेन शिथिलः अदृढः अरूढमूल इति यावत् । तरुः वृक्षः इवेत्युपमायाम् ॥ **समुद्धर्तुं सुकर इति** ॥ अत्राचिरत्वनवत्वयोः वस्तुप्रतिवस्तुभावः । राज्यप्राप्त्यादेः संरोहणादेश्च बिम्बप्रतिबिम्बभावः । तेनानयोरौपम्यं गम्यते । राज्यप्राप्तेः संरोहणसाम्येनान्याधीनत्वादि द्योत्यते । अरूढमूलत्वस्य शैथिल्यसाम्येन वृक्षस्य शैथिल्यं यथा कालेनापगच्छति तथा शत्रोः प्रकृतिरञ्जनेनारूढमूलत्वमपीति द्योत्यते । ततश्च वृक्षस्येव शत्रोरत्यन्तदुरुच्छेदत्वं च । पूर्वार्धे सामान्यनिबन्धनाप्रस्तुतप्रशंसा । नूतनो वैदर्भः समुद्धर्तुं सुकर इत्यर्थप्रत्यायनात् । मतिश्च भावः । वृत्तमार्या ॥ अनुमोदते—**तेन हीति** ॥ अवितथं सफलं भवत्विति शेषः । अनुष्ठानफलं हि शास्त्रकारवचनम् । अतः शास्त्रोक्तमञ्जसैवानुष्ठेयमिति भावः । अनुष्ठेयमाह—**इदमित्यादि** ॥ इदं माधवसेनामोचनं कालविलम्बे नवत्वापगमान्निमित्तान्तरं नान्वेष्टव्यमित्येवकारेण प्रकाश्यते । **आदाय** कृत्वा **समुद्योजय** दानमानादिभिः सम्यगुद्युक्तां कुरु । **तां** वीरसेनप्रमुखाम् । अत्र प्रकरणे क्रोधादिव्यभिचरितो वीरो रसः । स च शृङ्गाराङ्गभूतः । अनेन प्रकरणेन माधवसेनसोदर्या मालविकेति सहृदयैरवगम्यत इति च बोध्यम् । अथ नायकस्य नायि-

---

१. यदाज्ञापयति २. निमित्तमादाय समुद्योज्यतां सेनाधिपतिः ।

(परिजनश्च यथाव्यापारं राजानमभितः स्थितः ।)

(ततः प्रविशति विदूषकः ।)

**विदूषकः**—आणत्तोम्हि तत्तहोदा रण्णा । गोदम, चिन्तेहि दाव उवाअं, जह मे जदिच्छादिट्ठपडिकिदी मालविआ पच्चक्खदंसणा होदित्ति । मए वि तं तह किदं । जाव से णिवेदेमि । (इति परिक्रामति ।)

आज्ञप्तोऽस्मि तत्रभवता राज्ञा—'गौतम, चिन्तय तावदुपायम्, यथा मे यदृच्छादृष्टप्रतिकृतिर्मालविका प्रत्यक्षदर्शना भवति' इति । मया च तत्तथा कृतम् । यावदस्मै निवेदयामि ।

**राजा**—(विदूषकं दृष्ट्वा ।) अयमपरः कार्यान्तरसचिवोऽस्मानुपस्थितः ।

**विदूषकः**—(उपसृत्य) वड्ढदु भवं । वर्धतां भवान् ।

**राजा**—(सशिरःकम्पम्) इत आस्यताम् ।

(विदूषक उपविष्टः ।)

**राजा**—वयस्य, कच्चिदुपेयोपायदर्शने[1] व्यापृतं ते प्रज्ञाचक्षुः ।

**विदूषकः**—पओअसिद्धिं पुच्छ । प्रयोगसिद्धिं पृच्छ ।

---

काविषयकसङ्कल्पाद्यवस्थां वर्णयिष्यन्नादौ तदनुगुणतया परिजनपदेन सूचितस्य नर्मसाचिवस्य प्रवेशमाह—**तत इत्यादि** ॥ **चिन्तयेति** ॥ **तावत्** प्रथमम् । दर्शनोपायचिन्तनस्य प्राथम्योक्त्या स्पर्शनादिलाभोऽप्यस्यास्त्वदुपायसाध्य एवेति द्योत्यते । **यथा** येन प्रकारेण । तथोपायं चिन्तयेति संबन्धः । यदृच्छया दैवगत्या दृष्टा प्रतिकृतिर्यस्याः । प्रतिकृतिदर्शनस्य यादृच्छिकत्वोक्त्या दैवमत्रानुकूलमिति द्योत्यते । तेन तद्दर्शनादावुत्साहहेतुराशालवश्च सूच्यते ॥ **तथा कृतमिति** ॥ प्रत्यक्षदर्शनोपायः कृत इत्यर्थः । अत्र हर्षो भावः । चिन्तयेत्याद्याज्ञावचनेन गम्यमानं राज्ञो मालविकादर्शनौत्सुक्यमारम्भो नाम प्रथमावस्था । तथा च बीजारम्भसमन्वयान्मुखसन्धिः । नायको नर्मसचिवं दृष्ट्वा हृष्ट आह—**अयमिति** ॥ अपरः राज्यकार्यसचिवाद्भिन्नः । परो नेत्यपरः मदभिन्न इत्यर्थश्च । कार्यान्तरं राज्यकार्यव्यातिरिक्तकार्यम् । यद्वा कार्यभेदः तृतीयपुमर्थ इति यावत् । तत्र सचिवः सहायः । नर्मसचिवोऽपि हर्षं प्रकाशयन्नाह— **वर्धतामिति** ॥ समुदाचाररूपया वर्धतामित्याशिषा दर्शनोपायस्य मया प्रयुक्तत्वादयं भवदभ्युदयकाल इत्यर्थश्च द्योत्यते । तद्भावज्ञानजनितहर्षेण राज्ञः शिरःकम्पः । कच्चिदित्यव्ययमिष्टप्रश्ने । उपेयस्य साध्यस्य मालविकासाक्षाद्दर्शनरूपस्य यः उपायः तस्य दर्शने **व्यापृतं** प्रवृत्तं **ते** प्रज्ञातिशयादिगुणविशिष्टस्य भवतः प्रज्ञैव चक्षुरिति रूपकम् । तदुपायो बुद्ध्या चिन्तितः कच्चिदित्यर्थः । अत्र गम्यमानस्य मालविकाभिला-

---

१. अपि किंचिदु.

**राजा**—कथमिव ।

**विदूषकः**—(कर्णे ।) एव्वं विअ । एवमिव ।

**राजा**—साधु वयस्य, निपुणमुपक्रान्तम् । दुरधिगमसिद्धावप्यस्मिन्नारम्भे वयमाशंसामहे । कुतः ।

अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव ।
दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥ ९ ॥

षरूपबीजस्योपन्यासादुपक्षेपः । स्वनैपुण्यं दर्शयन्नुत्तरमाह— **प्रयोगेति** ॥ प्रयोगः प्रयुक्तोपायः तस्य सिद्धिं फलसिद्धिमित्यर्थः ॥ **पृच्छेति** ॥ न केवलमुपायश्चिन्तितः किंतु लब्धः प्रयुक्तश्च । अतस्तस्य फलसिद्धिर्भविष्यति वा न वेति पृच्छेत्यर्थः । उपायाकर्णनोत्सुकः पृच्छति— **कथमिवेति** ॥ इवशब्दो वाक्यालङ्कारे ॥ **कर्णे एवमिवेति** ॥ अनेन तस्य गोप्यत्वं द्योत्यते । प्रसङ्गादग्रे प्रकाशं गोप्यं वस्तु कर्णे एवमिवेति कविभिः प्रयुज्यते । यथोक्तं—'कर्णे एवमिवेत्युक्त्वा ज्ञाप्यः पश्चा प्रसङ्गकः' इति । तं श्लाघमान आह—**वयस्येत्यादि** ॥ नैपुण्यात्स्नेहातिशयाच्च सखित्वयोग्यो भवानिति संबुद्ध्या द्योत्यते । **निपुणं** साधु नैपुण्यगमकं वा । **उपक्रान्तं** भवता उपक्रमः कृतः । 'उपक्रमश्चिकित्सायामारम्भे च' इति कोशः । यथा निपुणमतेर्वैद्यस्योपक्रमः फलति तथा तवेत्युपमा उपक्रान्तशब्दशक्त्या ध्वन्यते । अत आह— **दुरधिगमेति** ॥ इदानीं दुरधिगमेति च पाठः । अस्मिन्नारम्भे मालविकादर्शनार्थे भवदनुष्ठिते उद्यमे सति । अनेन भवदुद्यमेन हेतुनेति यावत् । 'आरम्भस्तु त्वरायां स्यादुद्यमे' इति मेदिनी । दुरधिगमस्य दुर्लभस्य सिद्धिः निष्पत्तिः । यद्वा दुरधिगमा दुर्लभा सिद्धिः मालविकादर्शनरूपसाध्यसिद्धिः तस्यां विषये । दुर्लभायामपि सिद्धावित्यर्थः । अपीति विरोधे । तेन दुर्लभसिद्धेरनाशंसनीयत्वं द्योत्यते ॥ **वयमिति** ॥ उपायलाभादिना स्वस्य धन्यत्वं बहुवचनेन द्योत्यते ॥ **आशंसामहे** अभिलषामः । आशास्महे इति च पाठः । भवदुपायबलेन साध्यनिष्पत्तेर्निश्चयात् धारिणीकर्तृकान्तर्धापनादिप्रतिबन्धकसत्त्वेन दुर्लभस्यापि मालविकादर्शनस्य सिद्धिमभिलषाम इत्यर्थः । यथा शाकुन्तले— 'भव हृदय साभिलाषम्' इत्यादि । अत्राभिलाषरूपकार्यमुखेन तत्कारणस्य सिद्धिनिश्चयस्य प्रतिपादनादप्रस्तुतप्रशंसा । 'आशंसन्ते सुरसमितयः' इत्यादाविवाशंसामहे इत्यस्य निश्चिन्महे इत्यर्थो वा । लटा च पूर्वमाशंसा नाभूदिति द्योतितम् । दुरधिगमेत्यादि आरम्भविशेषणमिति केचित् ॥ **कुत इति** ॥ मया उपाये प्रयुक्ते साध्यसिद्धिनिश्चयेन संप्रति तदाशंसा कुत इति चेदुच्यत इत्यर्थः । सामान्येन तत्समर्थकमाह—**अर्थमिति** ॥ **प्रभुः** शक्तः अपीति शेषः । उत्तरार्धे सच-

१. इदानीं (अधिकः) २. वयमाशास्महे.

(नेपथ्ये)

**अलं बहु विकत्थ्य । राज्ञः समक्षमेवावयोरधरोत्तरयोर्व्यक्तिर्भविष्यति ।**

**राजा**—(आकर्ण्य) **वयस्य, त्वत्सुनीतिपादपस्य इदं कुसुमं[1] उद्भिन्नम् ।**

**विदूषकः**—**फलं वि दे[2] किखस्ससि । फलमपि द्रक्ष्यसि ।**

---

क्षुरपीत्यभिधानात् । अर्थं साधयितुं समर्थोऽपीत्यर्थः । जन इति च शेषः । **सहायवान्** प्रशस्तसहायसंपन्नः **एव** न तु सहायेन विरहितः । **सप्रतिबन्धं** प्रतिबन्धकसहितम् । **अर्थं** प्रयोजनम् । **अधिगन्तुं** लब्धुम् । अर्हति भवतीति वा शेषः । तुमुनः साधुत्वायाध्याहारः कार्यः । तादृशार्थलाभवान् भवतीत्यर्थः । प्रतिबन्धकसत्त्वेन दुर्लभोऽर्थः प्रभोरपि जनस्य सत्सहायबलेनैव सिध्यतीत्यर्थः । उक्तमर्थं विशेषेण समर्थयते—**दृश्यमिति** ॥ **सचक्षुरपि** चक्षुरिन्द्रिययुक्तोऽपि । तमसि सति **दृश्यं** संनिकृष्टत्वादिना द्रष्टुं योग्यं **वस्तु । दीपेन** आलोकेन **विना न पश्यति** आलोकसहायेनैव पश्यतीत्यर्थः । अत्रार्थान्तरन्यासोऽलङ्कारः । मतिः हर्षश्च भावः । यद्वा आशंसामह इत्यस्याभिलषाम इत्येवार्थः । कुत इति चेत् साध्यसिद्धिनिश्चयादिति सामान्येनाह— अर्थमिति ॥ अत्र प्रभुपदेन राज्ञः, प्रतिबन्धकपदेन धारिणीकर्तृकान्तर्धापनादेः, अर्थपदेन मालविकादर्शनादेः, सहायपदेन नर्मसचिवस्य च प्रतिपादनात्सामान्यनिबन्धनाप्रस्तुतप्रशंसा । अत्र दृष्टान्तमाह —दृश्यमिति ॥ दृष्टान्तश्चात्रालङ्कारः । प्रभुचक्षुष्मदाद्योः बिम्बप्रतिबिम्बभावेनोक्तेः । तेन चोपमा गम्यते । दृश्योपमया मालविकायाः संनिकर्षस्थित्यादिना तद्दर्शनस्य लाभयोग्यत्वं, तमस्साम्येन धारिणीकर्तृकान्तर्धापनादेः प्रतिबन्धकस्य प्राबल्यं, दीपोपमया नर्मसचिवस्य प्रतिबन्धकनिवर्तनसामर्थ्यं च द्योत्यत इत्यलम् । वृत्तमार्या ॥ दुरधिगमेत्यादिवाक्येन बीजस्य बहुलीकरणात्परिकरः ॥ **अलमित्यादि** ॥ **विकत्थ्य** आत्मानं श्लाघयित्वा । अलमिति निषेधे । अत्र हेतुमाह— **राज्ञ इत्यादि** ॥ परस्य हीनत्वमात्मनः श्रेष्ठत्वं चाभिसंधाय द्वाभ्यामप्यधरोत्तरयोरित्युक्तम् । अधरः अपकृष्टः, उत्तरः उत्कृष्टः । भावप्रधानो निर्देशः । अधरोत्तरत्वयोरित्यर्थः । व्यक्तिः प्रकाशः । नाट्याचार्ययोरिदं वचनमाकर्ण्य नर्मसचिवप्रयुक्तोपायस्य उपेयाभिमुख्यमवगम्य संतुष्ट आह—**वयस्येत्यादि** ॥ नीतेः पादपत्वरूपणेन लोकोपकारित्वादिकं व्यज्यते । इदमित्यस्य वचनमित्यर्थः । वचनस्य कुसुमत्वेन रूपणात् फलोन्मुख्यादिकं द्योत्यते । न केवलं पुष्पोत्पत्तिरित्याह— **फलमपीति** ॥ मालविकादर्शनरूपं नीतेः फलमप्यनुभविष्यसीत्यर्थः । फलपदेन नीतिफलं पादपफलं च विवक्षितमिति श्लिष्टरूपकम् । अत्र बीजस्य दृढीकरणात् परिन्यासः । अनुष्ठितेत्यादिविज्ञापनप्रकारः । आज्ञा सेनासमुद्योजनादेशः अनुष्ठितेत्यनेन शब्दशक्त्या राजा-

---

१. पुष्पमु २. अइरेण ३. अचिरेण.

(ततः प्रविशति कञ्चुकी ।)

**कञ्चुकी**—देव, अमात्यो विज्ञापयति अनुष्ठिता प्रभोराज्ञेति । एतौ पुनर्हरदत्तगणदासौ

उभावभिनयाचार्यौ परस्परजयोद्यतौ[1] ।
त्वां द्रष्टुमिच्छतः[2] साक्षाद्भावाविव शरीरिणौ[3] ॥ १० ॥

**राजा**—प्रवेशय तौ ।

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रम्य पुनस्ताभ्यां सह प्रविश्य) इत इतो भवन्तौ ।

**हरदत्तः**—(राजानमवलोक्य ।) अहो दुरासदो राजमहिमा ।

न च न परिचितो न चाप्यरम्य-
श्चकितमुपैमि तथापि पार्श्वमस्य ।
सलिलनिधिरिव प्रतिक्षणं मे
भवति स एव नवो नवोऽयमक्ष्णोः ॥ ११ ॥

---

ज्ञाया वेदविहितक्रियासाम्यं द्योत्यते । तेन तदकरणे नरकपात इव दण्डो भवतीति च ॥ **एतावित्यादि** ॥ पुनश्शब्दः प्रकरणान्तरारम्भरूपविशेषद्योतकः । हरदत्तशब्दस्य पूर्वनिपातो राजवल्लभत्वेन हरदत्तस्याभ्यर्हितत्वं द्योतयति ॥ **उभाविति** ॥ **शरीरिणौ** मूर्तिमन्तौ । साक्षात् भावावभिनयाविवेत्युत्प्रेक्षया नाट्यविद्यावैशद्यातिशयः द्योत्यते । भावाविव विवादिनाविति च पाठः । अभिनयाचार्यावित्यनेनोक्तं विद्याया एकत्वमाचार्यत्वादिना साम्यं च उभयोः परस्परजयोद्यमे हेतुः, स च दर्शनेच्छायामिति काव्यलिङ्गं च । अत्राचार्यद्वयगतो रोषादिव्यभिचरित उत्साहो भावः । उत्तरत्राप्यस्य ध्वनिरूह्यः । अनुष्टुप् छन्दः । कञ्चुकिगतश्चाचार्यविषयको रतिरूपो भावः । हरदत्तो दूरे राजानं विलोक्य किञ्चिच्चकितस्तस्य महिमानमनुसंधायाह— **अहो इत्यादि** ॥ राजति दीप्यत इति राजा, रञ्जयतीति राजेत्यर्थद्वयमत्र विवक्षितम् । तत्राद्योऽर्थो वक्ष्यमाणायाः परिचयेऽप्यपरिचयप्रतीतेः अपरश्च रम्यत्वप्रतीतेरुपपादक इति बोध्यम् । राज्ञोऽस्य महिमा स्वाभाविकः प्रभावविशेषः । **दुरासदः** दुःखेन समीपं प्राप्तुं शक्यः । महिमहेतुकं राज्ञो दुरासदत्वं महिमन्यारोप्यैवमुक्तम् । अथ च दुरासदः दुर्विज्ञेयः ॥ **अहो** विस्मयकारीत्यर्थः । राज्ञो दुरासदत्वमुपपादयति —**न चेति** ॥ अयमित्यस्यापकर्षः । न परिचितश्च न, अपरिचितश्च नेत्यर्थः, परिचित एवेति भावः । अरम्यः आकृत्यादिना तीक्ष्णश्च न । अपीत्येवार्थे । नैवेत्यर्थः । उभयत्र चका-

---

१. जयैषिणौ २. द्रष्टुमुद्यतौ ३. विवादिनौ.

**गणदासः**—महत्खलु पुरुषाकारमिदं ज्योतिः । तथा हि —

रेणापरिचितत्वस्य तैक्ष्ण्यस्य च प्रत्येकं चकितत्वे हेतुत्वमस्तीति द्योत्यते । नापीत्येवकारार्थोऽपिशब्दः निषेधं द्रढयन् यथाकथंचिदप्यरम्यत्वप्रतीतिरस्मिन्न भवतीति द्योतयति ॥ **तथापि** अपरिचितत्वारम्यत्वयोरभावे सत्यपि ॥ **अहमस्य पार्श्वम्** ॥ पार्श्वमित्यनेनाभिमुखोपगमनस्यात्यन्तदुष्करत्वं द्योत्यते ॥ **चकितं** भीतं यथा तथा **उपैमि** ॥ राज्ञामुपगमने तेषामपरिचितत्वेन तीक्ष्णत्वेन वा जनानां चकितत्वं जायते । अत्रोभयोरभावेऽपि मम चकितत्वं जायत इत्यर्थः । अत्र विभावनालङ्कारः । यथा प्रियदर्शिकायां 'तत्क्षणमपि निष्क्रान्ताः कृतदोषा इव विनापि दोषेण । प्रविशन्ति शङ्कमाना राजगृहं प्रायशो भृत्याः ॥' इति । ननु भयहेतोरभावे कथं भयोत्पत्तिरिति शङ्कां परिहर्तुं तद्धेतुं दर्शयन्नाह—**सलिलेति** ॥ **स एव** सदा परिचितपूर्व एव । एवकारेण नवत्वप्रतीतिर्न घटत इति द्योत्यते ॥ **अयं** तेजोविशेषादिप्रभावविशिष्टः पुरो दृश्यमानः । अयमित्यनेन नवत्वप्रतीतेः हृदयसंवादो द्योत्यते ॥ **सलिलनिधिः** समुद्रः । इवेत्युपमायाम् ॥ **प्रतिक्षणं** क्षणे क्षणे । **नवः** अननुभूतः अपरिचित इति यावत् । नवो नवः अत्यन्तापरिचितः सन् मे अक्ष्णोः भवति मद्दर्शनविषयो भवति । राज्ञो दर्शनकाले विस्मयजनकेन तत्प्रभावविशेषेणायमपरिचित इति प्रतीतिरेव जायत इत्यर्थः । अतश्चापरिचितत्वकार्यं चकितत्वमिति भावः । समुद्रोऽपि तन्महिम्ना परिचितोऽप्यपरिचितत्वेन प्रतीयते । तदुपगमने चकितत्वं च जायत इति प्रसिद्धम् । अनेन राज्ञोऽधृष्यत्वं दर्शितम् । ननु राज्ञो महिम्ना यथा परिचयस्य तिरोहितप्रायता तथा रम्यत्वस्यापि किमिति शङ्कापरिहारोऽप्यनेन वाक्येन कृतो महाकविना । तथाहि स एव रम्यत्वेनानुभूत एवायं प्रतिक्षणं नवो नवः अत्यन्तरम्यः अक्ष्णोर्भवति प्रतीयत इत्यर्थः । यथा माघे 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इति रम्यताप्रतीतिर्वर्धत एवेति भावः । अनेनाभिगम्यत्वं दर्शितम् । यथा रघौ 'भीमकान्तैः' इत्यादि । यतो राज्ञो महिमा तदुपगमने चकितत्वं जनयति अतो दुरासदः, यतश्च परिचितेऽप्यपरिचयप्रतीतिं जनयति अतो दुर्विज्ञेयस्वरूपश्चेति पूर्वेण संबन्धः । अत्र हरदत्तगतो विस्मयादिभिरुपचितो राजविषयको रतिभावः । वक्ष्यमाणश्लोकेऽप्येवं बोध्यम् । वृत्तं पुष्पिताग्रा ॥ गणदासोऽपि राजदर्शनजनितेन शङ्कातिरेकेण तमुपगन्तुमशक्नुवन्नाह—**महदित्यादि** ॥ इदमित्यनेनाशक्यवर्णनीयत्वं द्योत्यते । पुरुषस्याकार इवाकारो यस्य तत् पुरुषरूपमवलम्बितम् । महत् सूर्यादितेजसोऽतिशयितम् ज्योतिस्तेजः । ज्योतिःपदेन तेजस्वी लक्ष्यते । तेजसो भूयस्त्वं व्यङ्ग्यम् । खल्वित्यवधारणे । अयं महातेजस्वी पुरुषः खल्वित्यर्थः ।

द्वारेनियुक्तपुरुषा[1]नुमतप्रवेशः
सिंहासनान्तिकचरेण सहोपसर्पन् ।
तेजोभिरस्य विनिवर्तितदृष्टिपातै-
र्वाक्यादृते पुनरिव प्रतिवारितोऽस्मि ॥ १२ ॥

**कञ्चुकी**—एष देवः । उपसर्पतां भवन्तौ ।

**उभौ**—(उपसृत्य) विजयतां देवः ।

**राजा**—स्वागतं भवद्भ्याम् । (परिजनं विलोक्य) आसने तावदत्र-भवतोः ।

(उभौ परिजनोपनीतयोरासनयोरुपविष्टौ ।)

---

उक्तमुपपादयति—**द्वारेति** ॥ द्वारेनियुक्तेन । 'तत्पुरुषे कृति' इत्यलुक् । पुरुषेणानुमतः प्रवेशो यस्य स तथा ॥ **सिंहासनान्तिकचरेण** कञ्चुकिना सह **उपसर्पन्** समीपं गच्छन् अहं विनिवर्तितः विशेषेण निवर्तितः दृष्टिपातः मच्चक्षुरिन्द्रियपतनं यैरिति हेतुगर्भम् । अस्य तेजोभिः क्षात्रैः तेजोविशेषैः । यथा रघौ 'राजलक्ष्मीं तेजोविशेषानुमिताम्' इति । **वाक्यादृते पुनः** वारणवचनाभावेऽपि **प्रतिवारितः** प्रतिनिषिद्ध इवास्मि । अत्र राजाभिमुख्येन गच्छतस्वचक्षुःप्रसरस्य निवर्तकत्वेन निमित्तेन स्वनिवारणकर्तृत्व तेजस्सु उत्प्रेक्ष्यत इत्युत्प्रेक्षालङ्कारः । पूर्वार्धे प्रवेशानुमननस्य राजवल्लभेन सहोपसर्पणस्य चोक्त्या तत एव सिंहासनान्तिकपर्यन्तगमनस्य राजानुमतत्वद्योतनेन च भयहेतोरभावो द्योत्यते । उत्प्रेक्षया च भयाधिक्यं द्योतितमिति विभावनालङ्कारध्वनिः । राजानुमत्या प्रविशतामपि यथा सैनिकैर्हेतुभिः दृष्टिप्रतिघातभयादिकं भवति तथा तेजोभिरपीति तेजसां सैनिकसाम्यं प्रतीयत इत्युपमाध्वनिश्च । यथा रघौ 'अनुभावविशेषात्तु सेनापरिगताविव' इति । अपिच 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' इति कोशाद्दृष्टिशब्देन ज्ञानसाधनानीन्द्रियाणि प्रतीयन्ते । तेन तेजसां सर्वेन्द्रियप्रसरप्रतिरोधकत्वेन चक्षुःप्रसरमात्रनिवर्तकात्सूर्यादितेजसो विशेषो गम्यत इति व्यतिरेकध्वनिश्च । पूर्वश्लोके चकितत्वानुवादेनोपगमनं विधेयतया निर्दिष्टम् । अत्र तूपसर्पणमनूद्य प्रतिवारणस्य विधानाच्चिरत्नोऽप्यधिकराजपरिचयात् हरदत्तात् न्यूनतत्परिचयस्य गणदासस्य भयाधिक्यं द्योत्यत इति च ज्ञातव्यम् । वृत्तं वसन्ततिलकम् ॥ **उपसर्पतामिति** ॥ अनेनाचार्यौ शङ्कया दूरत एव स्थिताविति गम्यते । स्वागतमित्यत्र काक्वा प्रश्नः । सुष्ठु सुखकरमागतं स्वागतम् । भवदागमनमस्मत्सुखकरमित्यर्थश्च स्फुरति ॥ **आसने इति** ॥ आनीयेतामिति शेषः । तदनुक्त्या राज्ञो मितभाषित्वादिकं द्योत्यते । अथाजानन्निव पृच्छति—

---

१. पुरुषाभिमत.

**राजा**—किमिदं शिष्योपदेशकाले युगपदाचार्ययोरुपस्थानम्[1] ।

**गणदासः**—देव, श्रूयताम् । सुतीर्थादभिनयविद्या[2] शिक्षिता । दत्तानुयोगश्चास्मि[3] देवेन, देव्या च परिगृहीतः

**राजा**—दृढं[4] जाने । ततः किम् ।

**गणदासः**—सोऽहममुना हरदत्तेन प्रधानपुरुषसमक्षम् 'अयं मे न पादरजसापि तुल्य' इत्यधिक्षिप्तः ।

**हरदत्तः**—देव, अयमेव मयि प्रथमं परिवादकरः, अत्रभवतः किल मम च समुद्रपल्वलयोरिवान्तरमिति । तदत्रभवानिमं मां च

---

**किमित्यादि** ॥ किं किंनिमित्तं शिष्योपदेशकाले गुरूणामन्यत्र गमनं वृथा न घटते नतरामिदानीमिह नतमां युगपत्, अतो महता हेतुना भाव्यम्, तद्धेतुः क इत्यर्थः । प्रधानजनसमक्षमधिक्षिप्तत्वेनामर्षातिरेकाद्गणदासः प्रथमं वक्ति—**देवेत्यादि** ॥ **सुतीर्थात्** शोभनाद्गुरोः । देवेन दत्तः अनुयोगः अनुज्ञा यद्वा शास्त्रविषयः प्रश्नः यस्य सः । दत्तशब्देनानुयोगस्य धनादिवत्स्पृहणीयत्वं द्योत्यते । दत्तप्रयोग इति क्वचित्पाठः । दत्तः स्वयं दर्शितः शिष्येभ्यः प्रतिपादितो वा प्रयोगो येनेति तदर्थः । एवं पाठे देवेनेत्यस्य गृहीत इत्यत्र संबन्धः ॥ **देव्या चेति** ॥ देवेन दत्तानुयोग इत्युक्त्वा देव्याःपरिग्रहो भवदनुमत्यैव अतो भवदीय एवाहमिति द्योत्यते । अत्रैकैकमप्यधिक्षेपस्याकर्तव्यत्वे हेतुः किमुत समुदाय इति बोधनद्वारा हरदत्तस्यापराधप्रकर्षद्योतनाय सर्वमुक्तम् । दृढं जान इत्युक्त्या राज्ञः प्रकृतकार्ये संरम्भो गम्यते ॥ **सोऽहमित्यादि** ॥ सोऽहं पूर्वोक्तोत्कर्षविशिष्टोऽहम् । अमुनेति सर्वनामपदेन हरदत्तं प्रत्यमर्षातिशयो निन्दा च गम्यते । प्रधानानि महामात्राः उत्तमा वा पुरुषाः । 'महामात्राः प्रधानानि' 'क्लीबे प्रधानं प्रमुखे' इत्यादि चामरः । तत्समक्षमित्यनेनाधिक्षेपस्यात्यन्तायोग्यत्वं द्योत्यते । हरदत्तकृताधिक्षेपं शब्दतोऽनुवदति—**अयमित्यादि** ॥ अधिक्षेपः दुर्वचनम् ॥ **देवेति** ॥ **अयमेवेति** ॥ एवकारः पौनर्वचनिकः । विद्वत्ताराजपरिग्रहाद्युत्कर्षविशिष्टानामधिक्षेपानर्हत्वं य उक्तवान् सोऽयमेवेत्यर्थः ॥ **मयीति** ॥ विद्वत्तातिशयराजकृतबहुमानादिपात्रभूत इत्याद्यर्थान्तरसंक्रमितम् । प्रथममित्यनेन स्वापराधस्य लाघवं द्योत्यते । परीवादोऽधिक्षेपः । गणदासकृताधिक्षेपमर्थतः स्ववाक्येनानुवदति—**अत्र भवत इति** ॥ राजसंनिधाने दुर्वचनस्यायोग्यत्वात् गणदासस्य वयोऽधिकत्वाच्च तमुद्दिश्यात्रभवत इत्युक्तिः । **अन्तरं** भेदः । जलतारतम्येन समुद्रस्य पल्वलस्य च यथा तथा विद्यादितारतम्येन गणदासस्य हरदत्तस्य च भेद इत्यर्थः । अत्रभवत इत्यादेः गणदासवचनानुवादत्वे समुद्रपल्वलयोरित्यनेन यथासंख्यं न घटेत,

---

१. युगपदाचार्याभ्यामत्रोपस्थानम् २. तीर्थात् ३. दत्तप्रयोगश्चास्मि ४. बाढं.

**शास्त्रे प्रयोगे च विमृशतु । देव एव नौ विशेषज्ञः प्राश्निकः ।**
**विदूषकः—समत्थं पडिण्णादं । समर्थं प्रतिज्ञातम् ।**
**गणदासः—प्रथमः कल्पः । अवहितो देवः श्रोतुमर्हति ।**
**राजा—तिष्ठतु[1] तावत् । पक्षपातमत्र देवी मन्यते[2] । तदस्याः पण्डित-कौशिकीसहितायाः समक्षमेव न्याय्यो व्यवहारः ।**
**विदूषकः—सुट्ठु भवं भणादि । सुष्ठु भवान्भणति ।**
**आचार्यौ—यद्देवाय रोचते ।**

---

अत्रभवत इत्युक्तिश्च स्वरसा न संगच्छेतेति बोध्यम् । इति परिवादकरः किलेति संबन्धः । किलेति वार्तायाम् । परिवादकरणं श्रुतमित्यर्थः । किलशब्देन गणदासकृताधिक्षेपस्य हरदत्तनाश्रुतत्वं गम्यते । तेन नर्मसचिवेन स्वार्थसिद्धये हरदत्ताय तथोक्तमिति च ॥ **तदिति** ॥ **विमृशतु** परीक्षताम् । प्रश्नमर्हतीति प्राश्निकः परीक्षकः । भवत्विति शेषः । अत्र **हेतुः—विशेषज्ञ इति** ॥ शास्त्रे प्रयोगे च विमृशत्विति वचनेन शास्त्रस्वरूपनिर्वचनेन प्रयोगप्रदर्शनेन च मम विद्वत्तां प्रत्याययिष्यामीति प्रतिज्ञा हरदत्तेन प्रकाशिता । देव इत्यादिना च प्राश्निकबाहुल्यनैरपेक्ष्यबोधनेन सद्यःकर्तव्यत्वं तेन परीक्षणे निर्भयत्वं च द्योत्यते । स्वमनीषितानुगुणं तच्छ्रुत्वा त्वयाप्येवमेव वक्तुमर्हमिति गणदासं बोधयितुं तत्प्रशंसति—**समर्थमिति** ॥ **प्रतिज्ञातं** हरदत्तप्रतिज्ञा । **समर्थं** शक्तिस्थं, भयरहितमिति यावत् । "समर्थस्त्रिषु शक्तिस्थः" इत्यमरः ॥ **प्रथमः कल्प इति** ॥ मुख्यः पक्ष इत्यर्थः । ममापीदमतिसंमतमित्यर्थः । अत्रायमेव प्रथमं परिवादकर इत्यादिहरदत्तवचनश्रवणे मया परिवादो न कृत इति गणदासेन वक्तव्येऽपि परीक्षणे पराजयभयादयमेवं मृषा वक्तीति श्रोतारो मन्येरन्निति शङ्कया तदनुक्तिः । प्रथमः कल्प इत्यभ्युपगमस्तु स्वस्य पराजयाभावनिश्चयात् । अत एव परीक्षणे कौतुकातिशयादाह—**अवहित इति** ॥ देव्या अनुमतिमन्तरा स्वमनीषितं न लभ्येतेति मत्वाह—**तिष्ठत्विति** ॥ इदमिति शेषः । परीक्षणमित्यर्थः । **तावत्** देव्यागमनपर्यन्तं **तिष्ठतु** निवृत्तं भवतु । अत्र हेतुमाह— **देवीति** ॥ **अत्र** अस्मिन्विषये **पक्षपातं** हरदत्तपक्षपातं **मन्यते** मंस्यते । मन्येतेति वा पाठः । हरदत्तस्य मदीयत्वेन तत्पक्षपातात्तदुत्कर्षाधानार्थं मयेदमारब्धमिति देवी मन्येतेत्यर्थः । किंच पक्षपातोऽभिप्रायविशेषः अन्यत्किंचिदभिसंधाय मयेदमारब्धमिति देवी मन्येतेत्यर्थश्च स्फुरति ॥ **पण्डितेति** ॥ कौशिकी हि पाण्डित्यातिशयवती देव्या बहुमता चेति तस्या अपि प्राश्निकपदार्हतां द्योतयितुं तत्सहिताया इत्युक्तिः । कौशिकी मालविकायां स्निग्धेति स्वाभीष्टसिद्ध्यर्था च ॥ **मौद्गल्येति** कञ्चु-

---

१. तिष्ठ यावत् २. मन्येत.

राजा—मौद्गल्य, अमुं प्रस्तावं निवेद्य पण्डितकौशिक्या सार्धमाहूयतां देवी ।

कञ्चुकी—यदाज्ञापयति देवः । (इति निष्क्रम्य सपरिव्राजिकया देव्या सह प्रविश्य) इत इतो भवती ।

देवी—(परिव्राजिकां विलोक्य) भअवदि, हरदत्तस्स गणदासस्स अ संरम्भे कहं पेक्खसि ।

भगवति, हरदत्तस्य गणदासस्य च संरम्भे कथं पश्यसि ।

परिव्राजिका—अलं स्वपक्षावसादशङ्कया । न परिहीयते [1]प्रतिद्वन्द्विनो गणदासः ।

देवी—जइ वि एव्वं, राअपरिग्गहो से पहाणत्तणं उवहरइ ।

यद्यप्येवं, राजपरिग्रहोऽस्य प्रधानत्वमुपहरति ।

परिव्राजिका—[2]अधिराज्ञीशब्दभाजनमात्मानमपि तावच्चिन्तयतु भवती । पश्य ।

किनो नाम ॥ **अमुं प्रस्तावमिति** ॥ आचार्ययोरतर्कितोपगमनादिकं सर्वं वृत्तान्तमित्यर्थः । देवी पृच्छति—**भगवतीत्यादि** ॥ **संरम्भे** परस्परजयोद्यमे **कथं पश्यसि** कस्य जयं मन्यसे । अनेन प्रश्नेन देव्या गणदासपराजयशङ्का द्योत्यते । तेन तद्विषयकस्नेहातिशयश्च, तेन गणदासनिर्बन्धाद्देवी सर्वमप्यनुज्ञास्यतीत्यर्थश्च कविना द्योत्यते । संरम्भस्य कथं वा परिणाम इत्यर्थश्चात्र स्फुरति । देवीशङ्कामवगम्याह—**अलमिति** ॥ स्वपक्षस्य गणदासस्य अवसादो न्यूनता तच्छङ्कया अलमिति निषेधे । अत्र हेतुमाह—**नेत्यादि** ॥ **प्रतिद्वन्द्विना** केनापि प्रतिवादिना, न केवलं हरदत्तेनेति भावः । तदुक्तमनुवदन्त्याह—**यद्यप्येवमिति** ॥ **राजपरिग्रहः** राज्ञः स्वायत्वेन परिग्रहः । राजकर्तृकबहुमत्यादिरित्यर्थः । **अस्य** हरदत्तस्य **महिमानं** गौरवम् **उपहरति** ददाति । उपहरत्युपायनं करोतीत्यर्थस्यापि प्रतीत्या हरदत्तस्य राजसाम्यं च द्योत्यते । राजपरिग्रहेण हरदत्तस्त्वत्तोऽधिकस्तस्माद्विवादे पराजय एवावयोः स्यादित्युपन्यस्य स्वपक्षावसादं शङ्कमानया देव्या गणदासस्य संरम्भे शिथिलीकृते राजवयस्येन सह मन्त्रितं स्वमनीषितं न सिध्येदिति विचिन्त्य कौशिकी देव्याः शङ्कां निरस्य प्रोत्साहयितुमाह— **अधीत्यादि** ॥ अधिका सर्वोत्कृष्टा राज्ञी अधिराज्ञी । देवीमहत्त्वस्य निरुपाधिकत्वं द्योतयितुं राजमहिषीत्याद्यनुक्त्वा अधिराज्ञीत्युक्तिः । अधिराज्ञीति यः शब्दस्तस्य भाजनमाश्रयम् । भाजनमित्यनेनाधिराज्ञीशब्दस्त्वय्येवावतिष्ठत इति द्योत्यते । आत्मानं स्वमपि न केवलं राजा-

१. प्रतिवादिनो २. अयि राज्ञी.

अतिमात्रभासुरत्वं पुष्यति भानोः परिग्रहादनलः ।
अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः ॥ १३ ॥

**विदूषकः**—अविह अविह उवट्ठिदा पीठमद्दिअं पण्डिअकोसिइं पुरोकदुअ देवी ।

अविध अविध उपस्थिता पीठमर्दिकां पण्डितकौशिकीं पुरस्कृत्य देवी ।

**राजा**—पश्याम्येनाम् । यैषा—

मङ्गलालंकृता भाति कौशिक्या यतिवेषया ।
त्रयी विग्रहवत्येव सममध्यात्मविद्यया ॥ १४ ॥

---

नमेवेत्यपिशब्दार्थः । तावत् साकल्येन । अनेन वाक्येन त्वत्परिग्रहोऽपि महिमाधायक इत्यर्थः कारणमुखेन प्रदर्शितः । ननु स्त्रीपुंसपरिग्रहकृतो विशेषोऽस्तीत्याशङ्कां परिहरन्ती देव्या उक्तं राजपरिग्रहस्यैव स्वयं प्रदर्शितं देवीपरिग्रहस्यापि महिमाधायकत्वं दृढीकर्तुं दृष्टान्तमाह—**पश्येति** ॥ पश्य स्वयं विचिन्तय । **अतिमात्रेत्यादि** ॥ **अनलः** स्वतो भासुरोऽग्निः **भानोः परिग्रहात्** रात्रौ स्वप्रभाधारत्वेन सूर्यकर्तृकात्स्वीकारात् । यथा रघौ—'दिनान्ते निहितं तेज' इत्यादि । अतिमात्रमत्यधिकं भासुरत्वं प्रकाशशालित्वं **पुष्यति** प्राप्नोति । **चन्द्रोऽपि** दिवा मन्दप्रकाशः चन्द्रोऽपि । निशेति समस्तं व्यस्तं वा । परिगृहीतः सन् महिमानं प्रकाशातिशयरूपं गौरवम् अधिगच्छति प्राप्नोति । अत्र महिमप्राप्तिरूपस्यैकस्यैवार्थस्य भिन्नशब्देन प्रतिपादनात् प्रतिवस्तूपमालङ्कारः । सूर्यपरिग्रहेणाग्नेरिव राजपरिग्रहेण हरदत्तस्य यथा गौरवं तथा रात्रिपरिग्रहेण चन्द्रस्येव देवीपरिग्रहेण गणदासस्यापीत्युपमा चानेन गम्या । दिवा ह्यग्निः स्वतः किंचित्प्रकाशः चन्द्रस्त्वत्यन्तमन्दप्रकाश इति व्यतिरेकोऽतिमात्रशब्देनापकर्षद्योतकापिशब्देन च द्योत्यते । तेन भानुपरिग्रहरात्रिपरिग्रहयोरपि व्यतिरेकः । अथ च भानुपरिग्रहेणाग्नेर्यावान्प्रकाशः ततोऽप्यतिशयितप्रकाशो हि रात्रिपरिग्रहेण चन्द्रस्येति ततोऽपि विशेषः । इममर्थं द्योतयता दृष्टान्तवाक्येन राजपरिग्रहदेवीपरिग्रहयोः व्यतिरेकद्योतनद्वारा त्वत्परिग्रहो निकृष्टस्यापि महिमातिशयाधायकः किं पुनस्त्वत उत्कृष्टस्य गणदासस्येति देवीप्रोत्साहनानुगुणोऽर्थो द्योत्यते । वृत्तमार्या ॥ **अविहेत्यादि** ॥ अविहेत्यव्ययम् आवेगद्योतकम् इह परिहासरूपेण प्रयुक्तम् । पीठं मृद्नातीति पीठमर्दिका नित्यं देव्याः संनिधिस्थेत्यर्थः । तदुक्तं, 'गीतवाद्यादिनिपुणो नित्यं संनिहितः प्रभोः । पीठमर्दः स विज्ञेयः' इत्यादि । देवीं विलोक्य सबहुमानमाह—**पश्यामीत्यादि** ॥ पश्यामीत्युक्त्या देवीदर्शने आदरादिकं गम्यते । दर्शनीयत्वं द्योतयन्नाह—**यैषा मङ्गलेति** ॥ मङ्गलैः मङ्गलकरैरलङ्कारैः न तु शोभामात्रकरैः **अलंकृता** । अनेन

**परिव्राजिका**—(उपेत्य) विजयतां देवः ।

**राजा**—भगवति, अभिवादये ।

**परिव्राजिका**—

महासारप्रसवयोः सदृशक्षमयोर्द्वयोः ।
धारिणीभूतधारिण्योर्भव भर्ता शरच्छतम् ॥ १५ ॥

**धारिणी**—जेदु अज्जउत्तो । जयत्वार्यपुत्रः ।

**राजा**—स्वागतं देव्यै । (परिव्राजिकां विलोक्य) भगवति, क्रियतामासनपरिग्रहः

(सर्वे उपविशन्ति ।)

**राजा**—भगवति, अत्रभवतोर्हरदत्तगणदासयोः परस्परविज्ञानसं-

---

देव्याः शमप्राधान्यं द्योत्यते । अत एव त्रयीसाम्यम् । त्रयीपक्षे मङ्गलैः श्रेयस्करैः कर्मभिः अलङ्कृता तत्प्रतिपादकत्वेन तदलङ्कृतत्वम् । यतिवेषयेत्यनेन सर्वोपास्यत्वादिकं विद्यासाधर्म्यं द्योत्यते । कौशिक्या समं वर्तमानेति शेषः । येषा पुरः समीपे दृश्यमाना देवी विग्रहवत्या मूर्तिमत्या अध्यात्मविद्यया ब्रह्मविद्यया समं वर्तमाना । त्रयी विग्रहवत्येत्यस्य विपरिणामेन त्रय्यापि संबन्धः । इवेत्युत्प्रेक्षायाम् । **भाति** प्रकाशते । उत्प्रेक्षया देव्यास्त्रयीसाम्यं तेन राज्ञस्तस्यां बहुमानादिकं तदुक्तकर्मानुष्ठातृत्वं च गम्यते । अध्यात्मविद्यासाम्येन कौशिक्याः मालविकासङ्घटनेन परमानन्दप्रदत्वं राज्ञा निरूपितं द्योत्यते । अपि च यथा बहुप्रकाराणि कर्माणि विदधत्यपि त्रयी अध्यात्मविद्यासहिता मुक्तिं प्रयच्छति तथा कौशिकीसहिता देवी कालान्तरे राज्ञो मालविकां दास्यतीत्यर्थश्च महाकविना द्योत्यते । कृताभिवादनस्य राज्ञस्तत्कालोचितामाशिषं प्रयुङ्क्ते— **महेति** ॥ महान् सारो बलं यस्य तथाभूतः प्रसवः पुत्रो यस्याः । भूपक्षे तु महतां साराणामुपादेयानां रत्नादिवस्तूनां प्रसवः उत्पत्तिस्थानम् । तयोः । सदृशी परस्परतुल्या स्वोचिता वा क्षमा अपराधसहिष्णुत्वरूपा तितिक्षा ययोः । धारिणी च भूतधारिणी भूमिश्च तयोः द्वयोः भर्ता पतिः पोषकश्च सन् । शरदां वत्सराणां शतम् इत्यत्यन्तसंयोगे द्वितीया । भवेति आशिषि लोट् । अत्र धारिणीभूतधारिण्योरेकभर्तृकत्वप्रतिपादनात्तुल्ययोगिता श्लेषोपस्कृता । तया साम्यबोधनद्वारा भूतधारिण्येव तव सपत्नी भवितुमर्हतीति प्रशंसा देवीं प्रति द्योत्यते । वीरप्रसवायास्तव केनापि हानिर्न भवेत्, पतिव्रतोचिता क्षमैव युक्तेत्यर्थश्च महेत्यादिविशेषणाभ्यां द्योत्यते । एवंविधायामस्यां भवतात्यर्थं न शङ्कनीयमित्यर्थो राजानं प्रति च द्योत्यते । अनुष्टुप् छन्दः ॥ **परस्परेति** ॥ परस्परस्य ज्ञानेन विद्यया सङ्घर्षः स्पर्धा । येन केनाप्यनयोः संरम्भप्रशमन एवाभिसन्धिरिति

घर्षो जातः। तदत्र भगवत्या प्राश्निकपदमध्यासितव्यम्।

**परिव्राजिका**—(सस्मितम्) अलमुपालम्भेन। पत्तने विद्यमानेऽपि ग्रामे रत्नपरीक्षा।

**राजा**—मा मैवम्। पण्डितकौशिकी खलु भगवती। पक्षपातिनावनयोरहं च देवी च।

**आचार्यौ**—सम्यगाह देवः। मध्यस्था भगवती नौ गुणदोषतः परिच्छेत्तुमर्हति।

**राजा**—तेन हि प्रस्तूयतां विवादवस्तु।

**परिव्राजिका**—देव, प्रयोगप्रधानं नाम नाट्यशास्त्रम्। किमत्र वाग्व्यवहारेण। कथं वा देवी मन्यते।

**देवी**—जइ मं पुच्छसि, एदाणं विवादो एव्व ण मे रोअदि।

**यदि मां पृच्छसि, तयोर्विवाद एव न मे रोचते।**

---

देवीं प्रत्याययितुमाह—**तदित्यादि**। **अलमिति**॥ **उपालम्भेन** परिहासेन। अलमिति निषेधे। राजवचनस्य परिहासरूपत्वमुपपादयति— **पत्तन इति**॥ अत्राप्रस्तुतप्रशंसा। यथा नगरे विद्यमाने सति ग्रामे रत्नतारतम्यपरीक्षणं न घटते तथा भवति सति मयि विद्वत्तारतम्यपरीक्षकत्वमिति भावः। अतो भवद्वचनं परिहासरूपमिति॥ **मेति**॥ नैव परिहास इत्यर्थः। अत्र हेतुमाह— **पण्डितेत्यादि**॥ नामैव भगवत्याः वैदुष्यातिशयं गमयतीति भावः। तर्हि सर्वे वयं प्राश्निका भवाम इति शङ्कां परिहर्तुमाह— **पक्षपातिनाविति**॥ अतो भगवत्यैव प्राश्निकपदमध्यासितव्यमिति भावः। **गुणदोषत इति**॥ ल्यब्लोपे पञ्चमी। गुणदोषौ विचार्येत्यर्थः। परिच्छेत्तुमियत्तया निर्णेतुम्। अथ कौशिकीमुखेन नाट्यप्रयोगविषयं व्यवस्थापयिष्यन् स्वाभिसंधिगोपनाय स्वयं शास्त्रवादमधिकृत्याह— **तेनेत्यादि**॥ **विवादवस्तु** विवादविषयप्रमेयम्। विवाद इति च पाठः। **देवेति**॥ प्रयोग एव प्रधानं यस्य तत्। नामेति प्रसिद्धौ। तेन स्वकपोलकल्पितत्वं निरस्यते। प्रयोगप्रसङ्गे देव्या भावविकारमालक्ष्य तां समावर्जयितुं तन्मतं पृच्छति— **कथमिति**॥ **यदीति**॥ विवाद एव किं पुनस्तदवान्तरभेदः॥ **मे इति**॥ चतुर्थ्यन्तम्। विवादस्यानभिमतत्वकथनेन सन्धानस्याभिमतत्वं द्योत्यते। मन्मतानुसारेण प्रवृत्तिरिष्यते चेदनयोः सद्यः सन्धानमेव करणीयमिति भावः। ईप्सितविरोधि तद्वचनं श्रुत्वाह—**न मामिति**॥ अनेन

---

१. सति २. नैतदेवं ३. पक्षपातिनावहं देवी च ४. गुणदोषौ नः ५. विवादः ६. राजा—कथं....

गणदासः—[1]न मां देवी समानविद्यतः परिभवनीयमनुमन्तुमर्हति ।

विदूषकः—[2]भोदि, देक्खामो उरब्भसंवादं । किं मुहा वेअणदाणेण ।

[3]भवति, पश्याम उरभ्रसंपातम् । किं मुधा वेतनदानेन ।

देवी—णं कलहप्पिओसि । ननु कलहप्रियोऽसि

विदूषकः—मा एव्वं । अण्णोण्णकलहप्पिआणं मत्तहत्थीणं एकदरस्सिं अणिज्जिदे कुदो उवसमो ।

मैवम् । अन्योन्यकलहप्रिययोर्मत्तहास्तिनोरेकतरस्मिन्ननिर्जिते कुत उपशमः ।

राजा—ननु [4]स्वाङ्गसौष्ठवातिशयमुभयोर्दृष्टवती भगवती ।

परिव्राजिका—अथ किम् ।

राजा—तदिदानीमतः परं किमाभ्यां प्रत्याययितव्यम् ।

---

मां संमाननीयमनुगन्तुमर्हसीति व्यतिरेकेणार्थो द्योत्यते । भवत्या विवादानभिमतत्वं मत्पराजयशङ्कयेति समानविद्या मां परिभवेयुः । अतो मदुत्कर्षावहो विवादोऽयं ते रोचतामिति भावः । देव्या निर्बन्धं शिथिलयितुं नर्मसचिवोऽपि सपरिहासमाह— **भवतीति** ॥ उरभ्रयोः मेषयोः संपातं संमुखेन पातमन्योन्याघातमित्यर्थः । अत्राप्रस्तुतप्रशंसा । उरभ्रयोः संपातमिव द्रष्टुः कौतुकावहमनयोः सङ्घर्षप्रवृत्तं नाट्यपाटवं पश्याम इत्यर्थः । आभ्यामेतत्प्रवर्तयितव्यमित्यत्र हेतुमाह— **किमित्यादि** ॥ **नन्विति** ॥ कलहप्रियत्वादेवैतद्दिदृक्षा तवेति भावः । **मैत्यादि** ॥ अन्योन्येत्यादावप्रस्तुतप्रशंसा । अनयोरेकस्य पराजयं विना संरम्भो दुष्प्रशम इत्यर्थः । अतो मयैवमुक्तं न तु कलहप्रियत्वादिति भावः । अनेन वाक्येन ईदृशः खलु महतां स्वभाव इत्यर्थान्तरन्यासध्वनिना भवद्भ्यां न विरन्तव्यमित्याचार्ययोः प्रोत्साहनं च गम्यते । इत्थमुक्तिप्रत्युक्तिकाजातं विलम्बमसहमानो राजा स्वमनीषितमवतारयितुं प्रकृतमनुसरन् पृच्छति— **नन्वित्यादि** ॥ स्वाङ्गानां स्वीयनयनाद्यवयवानां सौष्ठवं नृत्तविषयं कौशलं यद्वा अनुचर्नाचपदतेत्यादिना लक्षितोऽवस्थानविशेषः तस्यातिशयं दृष्टवती । नन्वित्यनेनेदानीमेवानयोस्तारतम्यं निरूप्य कथ्यतामित्यर्थः प्रकाशते । तच्च देवीप्रत्यायनार्थम् । अत्राङ्गसौष्ठवमिति वक्तव्ये स्वाङ्गेति स्वशब्दोक्त्या शिष्याङ्गसौष्ठवप्रदर्शनस्य प्राप्तकालता भगवतीं प्रति द्योतिता । अत एवाह—**तदिति** ॥ **किमिति** ॥ न किमपीत्यर्थः । **सस्मितमिति** ॥ विवक्षि-

---

१. देव न मां समानविद्यया परिभवनीयमनुगन्तुमर्हसि २. होदु ३. भवतु ४. सौष्ठवाभिनयमु.

परिव्राजिका—(सस्मितम्) तदेव वक्तुकामास्मि ।

शिष्टा क्रिया कस्यचिदात्मसंस्था
संक्रान्तिरन्यस्य विशेषयुक्ता ।
यस्योभयं साधु स शिक्षकाणां
धुरि प्रतिष्ठापयितव्य एव ॥ १६ ॥

विदूषकः—सुदं अज्जेहिं भअवदीए वअणं । एसो पिण्डिदत्थो उवदेसदंसणेण णिण्णओत्ति ।

श्रुतमार्याभ्यां भगवत्या वचनम् । एष पिण्डितार्थ उपदेशदर्शनेन निर्णय इति ।

हरदत्तः—परमरुचितं नः ।

गणदासः—देवि, एवमवस्थितम् ।

---

तस्यावसरलाभात् स्मितम् । तदेवेति ॥ पृष्टमेवेत्यर्थः । अथाभ्यां शिष्योपदेशप्रदर्शनमेवानुष्ठेयमित्यर्थं विवक्षितं द्योतयन्ती ताटस्थ्यापरिहारेण सामान्यत आह—शिष्टेति ॥ कस्यचिदात्मसंस्था स्वनिष्ठा क्रिया अभिनयादिशिक्षा । 'आरम्भो निष्कृतिः शिक्षा' इत्याद्यमरः । शिष्टा विशिष्टा अन्यस्यापरस्य कस्यचित्संक्रान्तिः क्रियायाः शिष्यजन इति शेषः । शिष्योपदेश इत्यर्थः । विशेषयुक्ता विशिष्टा । सर्वं वाक्यं सावधारणमिति आत्मसंस्था क्रियैव संक्रान्तिरेव चेत्यर्थ ऊह्यः । यस्य उभयं पूर्वोक्तद्वयं साधु विशिष्टं स एवेत्यन्वयः । शिक्षकाणां धुर्यग्रे प्रतिष्ठापयितव्यः प्रतिष्ठापनयोग्यः । स एवात्यर्थमुत्कृष्ट इति भावः । अनयोर्यस्योभयं विशिष्टं स एवोत्कृष्टतर इत्यर्थोऽनेन प्रकाशित इति सामान्यनिबन्धनाप्रस्तुतप्रशंसा । स उत्कृष्ट इत्यनुक्त्वा शिक्षकाणामित्यादिवचनेन शिष्योपदेशरूपाशिक्षानैपुण्यस्याचार्योत्कर्षाधानेऽन्तरङ्गत्वं द्योत्यते । तेन स्वयं प्रयोगे कौशलस्यानयोः दृष्टपूर्वत्वकथनेन चाभ्यामुपदेशकौशलमेव शिष्यजनप्रयोगद्वारा प्रदर्शनीयमित्यर्थो व्यञ्जितः । वृत्तमुपजातिः । इममेव व्यङ्ग्यार्थं भगवतीवचनश्रवणानुयोगपूर्वकमाचार्याभ्यां प्रवर्तयितुं नर्मसचिवो विवृणोति— श्रुतमित्यादि । श्रुतमित्यत्र काका प्रश्नः । पिण्डितार्थः सारार्थः । उपदेशः उपदिष्टोऽर्थः अभिनयः । अत्र युक्तिर्नाम संध्यङ्गम् । स्वशिष्याया राजप्रणयिन्या इरावत्या नैपुण्यातिशयनिश्चयेन हरदत्तः सहर्षमाह— परमरुचितमिति ॥ परमभिमतमिति च पाठः । गणदासस्तु लोकोत्तरगुणाया मालविकायाः प्रयोगप्रदर्शनेन स्वोत्कर्षसिद्धिं निश्चित्य तत्रोत्सुकोऽपि तादात्विकं देव्या भावविकारमवलोक्य तद्वैमुख्यशङ्कया तदनुमतिं पृच्छति—

---

१. श्लिष्टा २. परमभिमतं नः ३. एवं स्थितं.

**देवी**—जदा उग अमेहाविणी सिस्सा उवदेसं मलिणेदि, तदा आआरिअस्स दोसो णु ।

**यदा पुनरमेधाविनी शिष्या उपदेशं मलिनयति, तदा आचार्यस्य दोषो नु ।**

**राजा**—देवि, एवमापद्यते । विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयति ।

**देवी**—(स्वगतम्) जंह दाणिं । (गणदासं विलोक्य प्रकाशम्) अलं अज्जउत्तस्स ऊसाहकारणं मणोरहं पूरिअ । विरम णिरत्थआदो आरम्भादो ।

**यथेदानीम् । अलमार्यपुत्रस्योत्साहकारणं मनोरथं पूरयित्वा । विरम निरर्थकादारम्भात् ।**

---

**एवमिति** ॥ एवमुक्तप्रकारेण अभिनयप्रदर्शनमित्यर्थः । **अवस्थितं** व्यवस्थितं निश्चितमिति यावत् । काका प्रश्नः । यद्वा एवमवस्थितमुपस्थितं प्राप्तमिति यावत् । अतः एवं किं निश्चितमित्यर्थात् शेषो बोध्यः । एवं स्थितमिति च पाठः । राज्ञे मालविकाप्रयोगप्रदर्शनमसहमाना देवी पुनरुपदेशदर्शनेन निर्णय इत्युक्तमाक्षिपन्त्याह— **यदेत्यादि** ॥ अमेधाविनीत्यनिपुणेत्यस्य चोपलक्षणम् । **मलिनयति** दूषयति । दोषो नन्विति प्रश्ने । स्वरेण च तदाक्षेपः प्रकाश्यते । शिष्यजनस्यामेधावित्वादिकमाचार्यदोषप्रयोजकं नैव, तदुपदेशस्य सर्वत्राविशेषादिति भावः । यथोक्तमुत्तररामचरिते—'वितरति गुरुः प्राज्ञे विद्याम्' इत्यादि । प्रयोगदर्शनोत्सुको राजात्र प्रत्यवतिष्ठते—**देवीत्यादि** ॥ एवमापद्यते शिष्यजनस्यामेधावित्वादिकमाचार्यदोषरूपेण परिणमतीत्यर्थः । एतत्समर्थयते—**विनेतुरिति** ॥ अद्रव्यम् अयोग्यं वस्तु । 'द्रव्यं भव्यं' इत्यमरः । तस्य परिग्रहः मेधावित्वादिगुणशून्यशिष्यपरिग्रह इत्यर्थः । न केवलमुपदेशन्यूनतेत्यपिशब्दार्थः । विनेतुः शिक्षकस्य । राज्ञो मनोगतमन्यदेवेति गणदासं बोधयितुं तन्मतं पृच्छति—**यथेदानीमिति** ॥ कथमिदानीमिति च पाठः । मन्यस इति शेषः । युवयोस्तारतम्यपरीक्षार्थमेवायमारम्भ इति इदानीं मन्यसे किमित्यर्थः । नैवमिति भावः । रोषाकुला पुनस्तमर्थं द्योतयन्ती प्रकाशमाह—**अलमिति** ॥ **मनोरथमिति** ॥ हरदत्तोत्कर्षाधानरूपं मनोरथमिति वाच्यार्थः । मालविकासाक्षाद्दर्शनरूपमिति हृदयस्थितोऽर्थः । पूरयित्वालं तत्पूरणं मास्तु । अत्रोपायमाह —**विरमेति** ॥ निष्फलात् त्वदभिलषितफलसाधकात् विरम विरमणमुचितमिति भावः । तदा नर्मसचिवो गणदासं प्रोत्साहयितुं तत्पराजयशङ्कयैव देवीत्थमुक्तवतीति प्रकाशयन्नाह—**सुष्ठु**

---

१. मन्दमेहा २. मन्दमेधा ३. एवमुपपद्यते ४. कहं दाणिं ५. कथमिदानीं

**विदूषकः**—सुट्ठु होदी भणादि । भो गणदास, संगीदपदं[1] लम्भिअ सरस्सईउवाअणमोदआइ खादमाणस्स किं दे सुलहणिग्गहेण[2] विवादेण ।

सुष्ठु भवती भणति । भो गणदास, संगीतपदं[3] लब्ध्वा सरस्वत्युपायनमोदकानि खादतः किं ते सुलभ[4]निग्रहेण विवादेन ।

**गणदासः**—सत्यमयमेवार्थो देवीवचनस्य । श्रूयतामवसरप्राप्तमिदम् ।

लब्धास्पदोऽस्मीति विवादभीरो-
स्तितिक्षमाणस्य परेण निन्दाम् ।
यस्यागमः केवलजीविकैव[5]
तं ज्ञानपण्यं वणिजं वदन्ति ॥ १७ ॥

---

**देवीति** ॥ देवीवचनं सत्यमित्यर्थः । अथ च सुष्ठु निपुणं गणदासापकर्षतिरोधानकुशलमिति गूढार्थः । अथोत्तेजयितुमभिमुखीकृत्याह—**भो इत्यादि** ॥ **सङ्गीतेति** ॥ यदा तव सङ्गीतविद्योपदेशः अभूत् तदारभ्येत्यर्थः । खादत इत्यत्र संबन्धः । सरस्वतीति गणपत्यादीनामुपलक्षणम् । मोदकपदमपूपादीनां च । बालानां तत्तद्विद्यारम्भकाले सरस्वत्यादिनिवेदितानि मोदकादीनि तत्तद्विद्याविद्भ्यो देयानीत्याचार इति तानि खादत इत्युक्तिरापाततः प्रशंसारूपा । विद्योपदेशकाल इति पाठे तु त्वत्कर्तृकोपदेशकाल इत्यर्थः ॥ **किं त इति** ॥ विवादे पराजयरूपनिग्रहः प्रायेण भवति । तथाविधेन विवादेन तव किं स मास्त्वित्यापाततोऽर्थः । अथ च सङ्गीतोपदेशमारभ्येत्यनेन तव सङ्गीतोपदेश एव न त्वं तद्विद्यापारंगत इति द्योत्यते । तवाचार्यकं मोदकादिखादनमात्रफलकं, वैदुष्यमुपदेशसामर्थ्यं वा तव नास्तीति च खादत इत्यन्तेन च द्योत्यते । अत एव विवादे तव निग्रहोऽवश्यंभावीति च । ततश्च विरमणाभावे पराजयेनावमानो भविष्यतीति प्रकाश्यते । तत्प्रकाशितमर्थमवगम्यासहमानस्तदनुवदन्नाह—**सत्यमित्यादि** ॥ सत्यमित्यनुवादे । अयमेव अवमानलाभ एव देवीवचनस्य देवीवचनानुष्ठानस्य अर्थः फलम् । देव्या अभिप्रेते विवादाद्विरमणे कृतेऽवमानलाभ एवान्ते भविष्यतीत्यर्थः । तर्हि किं निश्चितमित्यत्राह—**श्रूयतामिति** ॥ अवसरप्राप्तमवसरेऽस्मिन् मम वक्तव्यतया प्राप्तम् इदं वक्ष्यमाणं वचनम् विवादान्न विरमामीत्यर्थं द्योतयन्सामान्येनाह—**लब्धेति** ॥ लब्धमास्पदं प्रतिष्ठा येन सः राजादिभिरुत्कृष्टपदं प्रापित इत्यर्थः ॥ **अस्मीति** ॥ इतीति हेतौ । इति मत्वेत्यर्थो वा । विवादभीरोः पराजयप्रतिष्ठाहान्यादिशङ्कया

---

१. सङ्गीदावदेसेण २. सुहणिग्गहेण ३. सङ्गीतापदेशेन ४. सुख ५ जीविकायै.

**देवी**—[1]अइरोवणीदा दे सिस्सा । ता अवरिणिट्ठिदस्स उवदेसस्स अण्णाअं पदंसणं ।

अचिरोपनीता ते शिष्या । तदपरिनिष्ठितस्योपदेशस्यान्याय्यं प्रदर्शनम् ।

**गणदासः**—अत एव मे निर्बन्धः ।

**देवी**—तेण हि दुवे वि भअवदीए उवदेसं दंसेह ।

तेन हि द्वावपि भगवत्यै उपदेशं दर्शयतम् ।

**परिव्राजिका**—देवि, नैतन्न्याय्यम् । सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय ।

---

विवादाद्भीतस्य । अत्र कारणेन कार्यं लक्ष्यते । विवादान्निवर्तमानस्येत्यर्थः । अत एव परेण कृतां निन्दामवमाननं तितिक्षमाणस्य सहमानस्य यस्य पुरुषस्य आगमः वेदशास्त्रादिविद्या केवलजीविकैव उपजीवनसाधनमेव । जीविकार्थे इति च पाठः । ज्ञानमेव पण्यं विक्रेयद्रव्यं यस्य तं । ज्ञानपदेनात्र ज्ञानकार्यं लोकबहुमानादिकं लक्ष्यते । तस्य देहयात्रार्थत्वेन क्षयिष्णुत्वादिना च पण्यत्वेन रूपणम् । **तं** तथाविधं पुरुषं **वणिजं वदन्ति** जना इति शेषः । अत्र परम्परितरूपकम् । वणिक्त्वरूपणं प्रति ज्ञाने पण्यत्वरूपणस्याङ्गत्वात् । पण्यत्वरूपणेन ज्ञानकार्यबहुमानादेः क्रमेण क्षयादिसूचनद्वारा प्रतिष्ठाहानिरन्ते देहयात्राहानिश्च भवेदिति च सूच्यते । अनया सामान्योक्त्या विवादाद्विरमणे परनिन्दा बहुमानादिक्षयश्च मे भविष्यतीति प्रकाशनात्सामान्यनिबन्धनाप्रस्तुतप्रशंसा च । अतो विवादान्न विरमामीत्यर्थश्चानेन द्योतितः । वृत्तमुपजातिः । अथ शिष्यजने विश्वासाभावादेव त्वं निवारितः न तु त्वयि बहुमानाद्यभावादिति प्रतिपादनेन पुनर्निरोद्धुमारभते—**अचिरोपनीतेति** ॥ अचिरोपनीतेत्यपरिनिष्ठितत्वे **हेतुः** । अपरिनिष्ठितस्य अलब्धस्थेम्नः । यदेव निवृत्तिहेतुत्वेन देव्योक्तं तदेव प्रवृत्तिहेतुत्वेनाह—**अत एवेति** ॥ अत एवाचिरोपनतत्वादेव । **निर्बन्धः** अस्या उपदेशप्रदर्शने निर्बन्धः । अत्र व्याघातोऽलङ्कारः । सद्य उपदेशस्य फलितत्वे ममोत्कर्षात्तत्प्रदर्शने निर्बन्ध इति भावः । एवं निरुद्धवचना देवी स्वमताविरोधेन गणदासमनोरथं पूरयितुं कमप्युपायं पश्यन्त्याह—**तेनेति** ॥ भगवत्यै राज्ञैव प्राश्निकपदे व्यवस्थापितायै भगवत्यै इत्यर्थः । तदुक्तिमाक्षिपति—**नैतदिति** । अन्याय्यत्वे हेतुमाह—**सर्वज्ञस्येति** ॥ निर्णयाभ्युपगमः निश्चायकत्वस्वीकारः । **दोषाय** भवतीति शेषः । अतो राजसहिताया एव मम प्राश्निकपदं युक्तमिति भावः । कौशिक्या गूढाभिप्रायमवगम्य देवी सेर्ष्यम-

---

१. अइरोवणीदाए सिस्साए उण पडिट्ठिदस्स उवदेसस्स अण्णाअं पआसणं ।
२. अचिरोपनीतायां शिष्यायां पुनः प्रतिष्ठितस्योपदेशस्यान्याय्यं प्रकाशनम् ।

**देवी**—(अपवार्य) [1]मुद्धे, परिव्वाज्जिए, किं मं जग्गादिं वि पसुत्तं विअ करेसि। (इति सासूयं परावर्तते।)

**[2]मूढे परिव्राजिके, किं मां जाग्रतीमपि प्रसुप्तामिव करोषि।**

(राजा देवीं परिव्राजिकायै दर्शयति।)

**परिव्राजिका**—(विलोक्य)

**अनिमित्तमिन्दुवदने किमत्रभवतः पराङ्मुखी भवसि।**
**प्रभवन्त्योऽपि हि भर्तृषु कारणकोपाः कुटुम्बिन्यः॥ १८॥**

**विदूषकः**—णं सकारणं एव्व। अत्तणो पक्खो रक्खिदव्वो। (गणदासं विलोक्य) दिट्ठिआ कोवव्वाजेण देवीए परित्तादो भवं। [3]ण खु सुसिक्खिदो वि सव्वो उवदेसदंसणे णिउणो होदि।

**ननु सकारणमेव। आत्मनः पक्षो रक्षितव्यः। दिष्ट्या कोपव्याजेन देव्या परित्रातो भवान्। [4]न खलु सुशिक्षितोऽपि सर्व उपदेशदर्शने निपुणो भवति।**

---

पवायाह—**मूढ इति**॥ अत्र जाग्रतीं प्रसुप्तामित्याभ्यां तत्कालभाविनी ज्ञानाज्ञाने लक्ष्येते। तयोर्दार्ढ्यप्रतिपत्तिः फलम्। युष्मन्मर्नाषितं तत्त्वतो जानन्तीमपि मां किमप्यजानन्तीं संकल्प्य प्रवर्तसे। अहो मूढत्वमित्यर्थः। इदमनुचितमिति परिव्राजिके इति संबुद्ध्या प्रकाश्यते। एवमुक्त्वा रोषावेशेन परावृत्तां देवीमत्रोपायश्चिन्त्य इति बोधयितुं परिव्राजिकायै दर्शितवान्। राजाभिप्रायं बुद्ध्वा चाटुवचनेन देवीं प्रसादयति—**अनिमित्तेति**। इन्दुवदने पूर्णचन्द्रतुल्यमुखीति संबुद्ध्या लावण्यचारुत्वादिगुणद्योतनद्वारा त्वद्गुणवशीकृतोऽयं कथमन्यासक्तः स्यादिति द्योत्यते। त्वन्मुखेन्दुसंदर्शनमहोत्सवमस्य मा भाङ्क्षीरिति च। नास्ति निमित्तं यत्र तदनिमित्तम्। अत्रभवतः पूज्यस्य अस्य महाराजस्य। अनेन सर्वथा पराङ्मुखीभवनस्यानौचित्यं द्योत्यते। किं पराङ्मुखी भवसि। किमित्यनेन पराङ्मुखीभवनस्यानौचित्यं प्रदर्श्यते। पराङ्मुखी भवसीत्यनेन तद्धेतुः कोपश्च निर्निमित्तः तवास्मिन् कोपो नोचित इत्यर्थः। उक्तं सामान्येन समर्थयते—**प्रभवेति**। कुटुम्बिन्यः निखिलमपि भर्तृकुटुम्बं स्वीयत्वप्रतिपत्त्या बिभ्राणाः। प्रभवन्त्योऽपि सर्वत्र प्रभुत्ववत्योऽपि। अपीति विरोधे। भर्तृषु विषये कारणकोपाः कारणाधीनकोपा भवन्ति। हीति प्रसिद्धौ। अत्रार्थान्तरन्यासः। संबुद्ध्याः साभिप्रायत्वात् परिकरः। पराङ्मुखी भवसीत्यत्र कार्यनिबन्धनाप्रस्तुतप्रशंसा च। आर्या वृत्तम्। गणदासा-

---

१. (जनान्तिकं) मूढे परिव्वाजिए, मं जग्गतिंपि सुत्तं विअ करेसि। २. मूढे परिव्राजिके, मां जाग्रतीमपि सुप्तामिव करोषि। ३. सुसिक्खिदो वि सव्वो उवदेसेण णिण्हादो होदि। ४. सुशिक्षितोऽपि सर्व उपदेशेन निष्णातो भवति।

गणदासः—देवि, श्रूयताम् । एवं जानन्ति । तदिदानीम्—

विवादे दर्शयिष्यन्तं क्रियासंक्रान्तिमात्मनः ।
यदि मां नानुजानासि परित्यक्तोऽस्म्यहं त्वया ॥ १९ ॥

(आसनादुत्थातुमिच्छति ।)

देवी—(स्वगतम्) का गई । (प्रकाशम्) पहवदि आआरिओ सिस्स-जणस्स । का गतिः । प्रभवत्याचार्यः शिष्यजनस्य ।

गणदासः—चिरमपदे शङ्कितोऽस्मि । (राजानमवलोक्य) अनुज्ञातं

---

भिनिवेशेनैव देवीप्रतिबन्धनिवारणं शक्यमिति निश्चित्य गणदासस्य दुर्वारमाभिनिवेशं जनयितुं नर्मसचिवस्तदाह—नन्वित्यादि ॥ सकारणमेव ननु । अस्याः कोप इति शेषः । किं तत्कारणमित्यत्राह--आत्मन इति । गणदासं पराजयाद्रक्षितुमेव देव्या कोपो नाटित इत्यर्थः । अथ गणदासं विलोक्याह—दिष्ट्येति । दिष्ट्या त्वद्भाग्येन परित्रातः पराजयाद्रक्षितः । कुत एवमित्यत्राह—न खल्विति ॥ सुशिक्षितोऽपि किमुताशिक्षित इत्यपिशब्देन द्योत्यते । सर्वः न खलु निपुणः, किंतु कश्चिदेव निपुण इति भावः । अनेन हरदत्तस्य नैपुण्यं गणदासस्य तदभावश्च द्योत्यते । विवादे पराजयस्यावश्यंभावित्वात् एवं परित्रात इति पूर्वेण संबन्धः । तदाक्षेपमसहमान आह—देवीति ॥ श्रूयतामिति ॥ एतद्वचनमिति शेषः । न केवलमयं सर्वेऽप्येवमेव जानन्तीत्याह— एवमिति ॥ जानन्ति अवधारयन्ति । अवजानन्तीति वा पाठः । एवं सर्वेऽप्यवदेरन्निति भावः । अथ स्वयं व्यवसितं सनिर्वेदमाह—विवाद इति ॥ आत्मनः क्रिया शिक्षा तस्याः संक्रान्तिं शिष्यजनसंक्रमणं शिष्यप्रयोगमित्यर्थः । दर्शयिष्यन्तं स्वोत्कर्षप्राप्त्यै दर्शयितुमिच्छन्तं मां नानुजानासि चेत् त्वयाहं परित्यक्तोऽस्मीति तवैतदननुमननं मत्परित्यजनमेवेति हेतुहेतुमतोरैक्यकथनात् हेत्वलङ्कारः । एवमवमानमनुभवन्नहमत्र न स्थास्यामि किन्तु गमिष्यामीत्यर्थश्चानेन प्रकाशित इत्यप्रस्तुतप्रशंसा च । पथ्यावक्त्रं वृत्तम् । अत्र देवीकोपेन विच्छेदे प्राप्ते विदूषककृतप्रोत्साहनमुत्तराङ्कोपयोगित्वेनाविच्छेदकारणत्वाद्बिन्दुरित्याहुः । गणदासं वारयितुमपारयन्ती सविषादं चिन्तयति—का गतिरिति ॥ गणदासानुपेक्षणे मालविकाया अप्रकाशने च क उपाय इत्यर्थः । अथ तमपश्यन्त्याह—प्रभवतीति ॥ भवान्मालविकायाः प्रभुर्भवतीत्यर्थः । उपदेशोऽस्याः परिनिष्ठितश्चेत् प्रकाश्यतामिति भावः । शिष्यजनस्य प्रभवतीत्युक्त्याऽहमप्यस्याः प्रभविष्यामि, अतोऽद्य गणदासस्यार्थेऽस्याः प्रकाशनमनूद्य पश्चात्प्रतिबध्नामीति देव्या अभिसन्धिरत्र गम्यते । वक्ष्यते च ननु प्रभविष्यामीत्यादि । चिरमिति ॥ अपदे अस्थाने शङ्कितः देवी नानुमन्येतेति शङ्कितवान् । यद्वा शङ्कित इति

---

१. एवमवजानन्ति; एवं जनो गृह्णाति. २. दर्शयिष्यामि.

देव्या । तदाज्ञापयतु देवः कस्मिन्नभिनेयवस्तुन्युपदेशं दर्शयिष्यामि ।

राजा—[1]यत्रादिशति भगवती ।

परिव्राजिका—किमपि देव्या मनसि वर्तते । ततः शङ्कितास्मि ।

देवी—भण वीसद्धं । णं [2]पहविस्सं अत्तणो परिअणस्स ।

भण विस्रब्धम् । ननु [3]प्रभविष्याम्यात्मनः परिजनस्य ।

राजा—मम चेति ब्रूहि ।

देवी—भअवदि, भण दाणिं । भगवति, भणेदानीम् ।

परिव्राजिका—देव, [4]चतुष्पादोद्भवं छलितं दुष्प्रयोजमुदाहरन्ति । तत्रैकार्थसंश्रयमुभयोः प्रयोगं पश्यामः । तावता ज्ञायत एवात्रभवतोरुपदेशान्तरम् ।

आचार्यौ—यदाज्ञापयति भगवती ।

---

कर्मणि क्तः । असमर्थोऽयमिति देव्या शङ्कित इत्यर्थः । अथ राजानमाह— **अनुज्ञातमिति** । **कस्मिन्निति** ॥ कस्मिन्नित्युक्त्या सर्वस्यापि नाट्यस्योपदेशं दर्शयितुं निपुणोऽस्मीति द्योत्यते । वस्तु प्रमेयम् । ताटस्थ्यमवलम्ब्याह— **यत्रेति** ॥ तत्रेति शेषः । कौशिकी तदा देवीविस्रम्भणायाह— **किमपीति** ॥ शङ्कितास्मि विवक्षितस्य कथने भीतास्मि । तच्छ्रुत्वा सासूयमाह— **भणेति** ॥ विस्रब्धं निश्शङ्कम् । कुत इत्यत्राह— **नन्विति** । आत्मनः परिजनस्य प्रभविष्यामि नन्वित्यनेनाहं तव न प्रभु', अतस्तव मत्तः कुतो भयमिति प्रकाशितम् । अथ च मालविका मदधीनैव अतो युष्मन्मनोरथो न फलिष्यतीति च । देव्याः सासूयोक्तिमाकर्ण्य चाटुवचनेन सान्त्वयति— **मम चेति** ॥ मम च प्रभविष्यामीति वदेत्यर्थः । अथाविष्कृतोद्वेगामवचनामवस्थितां भगवतीमवलोक्य किञ्चिदपगतरोषा देवी तां भणने नियुङ्क्ते— **भगवतीति** ॥ भणेत्यतिसर्गे लोट् । 'आत्मानुवादानवबोधमात्रादिच्छाप्रवृत्तिः प्रतिहन्यते यत् । तत्रानुवादप्रतिबोधनेन प्रवर्तना प्रोक्त इहातिसर्गः ॥' इत्यतिसर्गस्वरूपं बोध्यम् । भगवतीत्यामन्त्रणेनेदानीमित्यनेन च देव्या रोषस्य प्रशाम्यदवस्था द्योत्यते । देवीसंमतिमवगत्य स्वमनीषितानुगुणमाह— **देवेत्यादि** । चतुर्णां पादानामुद्भवोऽस्मिन्निति वा चतुर्भ्यः पादेभ्यः उद्भवो यस्येति वा चतुष्पादोद्भवम् । तत्र छलिते । एकमर्थं संश्रयत इत्येकार्थसंश्रयमेकार्थविषयकमित्यर्थः । तावतैवेत्यन्वयः । नाट्यस्य चार्थस्य चैक्येनैवेत्यर्थः । उपदेशान्तरमुपदेशस्य भेदः । तारतम्यमिति यावत् । कथञ्चिदेवं देवीप्रतिबन्धे

---

१. यदादिशति २. पहवदि पहू अत्तणो परिअणस्स । ३. प्रभवति प्रभुरात्मनः परिजनस्य । ४. शर्मिष्ठायाः कृति चतुष्पदोत्थम्.

**विदूषकः**—देण हि दुवे वि वग्गा पेक्खाघरे संगीदरअणं करिअ अत्तहोदो दूदं पेसअन्तु। अहवा मिअङ्गसद्दो एव्व णो उट्ठावइस्सदि।

तेन हि द्वावपि वर्गौ प्रेक्षागृहे संगीतरचनां कृत्वा अत्रभवतो[1] दूतं प्रेषयतम्। अथवा मृदङ्गशब्द एव नः उत्थापयिष्यति।

**हरदत्तः**—तथा। (इत्युत्तिष्ठति।)

(गणदासो देवीं विलोकयति।)

**देवी**—(गणदासं विलोक्य) ण हि विअअपच्चत्थिणी अहं अज्जस्स। विअई होहि। न हि विजयप्रत्यर्थिन्यहमार्यस्य। विजयी भव।

(आचार्यौ प्रस्थितौ।)

**परिव्राजिका**—इतस्तावदाचार्यौ।

**आचार्यौ**—(परिवृत्य) इमौ स्वः।

**परिव्राजिका**—निर्णयाधिकारे ब्रवीमि। सर्वाङ्गसौष्ठवाभिव्यक्तये विगतनेपथ्ययोः[2] पात्रयोः प्रवेशोऽस्तु।

**उभौ**—नेदमावयोरुपदेश्यम्। (इति निष्क्रान्तौ।)

---

निवृत्तेऽतः परं तद्वचनावसरं न दास्यामीति निश्चित्याचार्यौ नर्मसचिवस्त्वरयति—**तेन हीत्यादि**। वर्गावित्यनेन द्वयोरपि सहायसंपत्तिरस्तीति द्योत्यते। तेन विलम्बो न युक्त इति च। **प्रेक्षागृहे** नृत्तगृहे। प्रेक्षा नृत्तेक्षणमित्यमरः। सङ्गीतरचनां कृत्वेत्यनेन नृत्तपूर्वरङ्गभूता सङ्गीतरचना शीघ्रं कर्तव्येति बोध्यते। अत्र भवन्तं प्रवेशयतमिति। अत्रभवतो दूतं प्रेषयतमिति च पाठः। अथोक्तप्रकारे कालविलम्बमाशङ्क्याह— **अथ वेति** ॥ **उत्तिष्ठतीति** ॥ हरदत्तस्य स्वातन्त्र्यात्पूर्वमुत्थानं गणदासस्य देवीपारतन्त्र्यात्तदवलोकनम्। गणदासस्य शङ्कामपनयन्त्याह— **न हीति** ॥ अहमार्यस्य जयपरिपन्थिनी नेत्युक्त्या मां वञ्चयितुमारब्धवतामेषामिष्टप्राप्तिरूपजयस्य परिपन्थिनी भवामीत्यभिसंधिर्गम्यते ॥ अथ कौशिकी राज्ञो निरावरणतया मालविकासर्वावयवदर्शनसिद्धिमुद्दिश्याचार्यावाह—**निर्णयेत्यादि** ॥ निर्णयाधिकारे निर्णयविषये। निर्णयार्थमिति यावत्। यद्वा निर्णयो युवयोस्तारतम्यनिश्चयः तदर्थो योऽधिकारो व्यापारः उपदेशप्रदर्शनरूपः तस्मिन्विषये। अथवा निर्णये विषये मम योऽधिकारः तस्मिन्निति निमित्तसप्तमी। तस्माद्धेतोरित्यर्थः। **विगतेति** ॥ नैपथ्यविगमेनैव सर्वाङ्गसौष्ठवाभिव्यक्तिः तयैव तारतम्यनिश्चयश्चेति भावः। अत्र विगतनेपथ्यपदेन वर्णिकायाः परिग्रह एव निषिध्यते, नतु वलयकुण्डलादेः। अतो वामं संधिस्तिमितवलयमित्यादेः

---

१. अत्रभवन्तं प्रवेशयतम् २. विरलनेपथ्ययोः.

**देवी**—(राजानमवलोक्य) जइ राअकज्जेसु ईरिसी उवाअणिउणदा अज्जउत्तस्स तदो सोहणं हवे ।

यदि राजकार्येष्वीदृश्युपायनिपुणतार्यपुत्रस्य, ततः शोभनं भवेत् ।

**राजा**—देवि,

अलमन्यथा गृहीत्वा न खलु मनस्विनि मया प्रयुक्तमिदम् ।
प्रायः समानविद्याः परस्परयशःपुरोभागाः ॥ २० ॥

(नेपथ्ये मृदङ्गध्वनिः । सर्वे कर्णं ददति ।)

**परिव्राजिका**—हन्त प्रवृत्तं संगीतम् । तथा ह्येषा

जीमूतस्तनितविशङ्किभिर्मयूरै-
रुद्ग्रीवैरनुरसितस्य पुष्करस्य ।
निर्ह्रादिन्युपहितमध्यमस्वरोत्था
मायूरी मदयति मार्जना मनांसि ॥ २१ ॥

---

वक्ष्यमाणस्य न विरोधः । 'आकल्पवेषौ नैपथ्य' इत्यमरः । **नोपदेश्यमिति** ॥ ज्ञातमेवैतदावयोरिति भावः । अत्र सर्वाङ्गेत्यादिना गुणवत्त्वस्य गम्यमानत्वाद्विलोभन, यदीत्यादिवक्ष्यमाणेन गूढोद्भेदनादुद्भेदनामकं चाङ्गमित्याहुः । अथ देवी राज्ञो मनोगतमवगत्य तमीर्ष्याकषायितेनाक्ष्णा विलोक्य निर्भर्त्सयति— **यदीत्यादि** ॥ राजकार्येष्वित्यनेन तेषामनन्यदुर्वहत्वादिकं द्योत्यते । ईदृशी स्वमनीषितप्रकृतकार्ये यादृशी तादृशीत्यर्थः । उपायनिपुणता उपायप्रयोगकौशलम् । साध्येषु राजकार्येषु उपयोक्तव्यमीदृशमुपायनैपुण्यम् ईदृशे क्षुद्रकार्ये त्वयोपयुज्यत इति अहो ते क्षुद्रकार्याभिनिवेशितेत्युपालम्भोऽनेन प्रकाश्यते । असूयादयोऽत्र भावाः । स्वार्थसिद्धये स्वयमेवानयोः विवादः प्रवर्तित इति देव्या अभिसंधिं तद्वचनेन प्रकाशितं परिहरन्नीर्ष्याकषायितां तां सान्त्वयन्नाह—**अलमित्यादि** ॥ अन्यथा मत्प्रयुक्त... गृहीत्वा अलं मा गृहाण । इदमित्यस्यात्रापि संबन्धः । उक्तेऽर्थे हेतुमाह—**न खल्विति** ॥ मनस्विनीति संबुद्ध्या मदुक्तस्य याथार्थ्यं त्वयैव ज्ञातुं शक्यमिति द्योत्यते । इदमनयोरुपदेशप्रदर्शनपर्यवसायि विवादरूपं वस्तु मया न खलु प्रयुक्तं प्रवर्तितम् । कथं तर्हि इदमुत्पन्नमित्यत आह—**प्राय इति** ॥ समाना एका विद्या येषां ते । 'समानास्सत्समैके' इत्यमरः । प्रायः परस्परस्य यशांसि पुरोभागः दोषदर्शनं येषां ते । मिथः साभ्यसूया इत्यर्थः । अत्र सामान्यनिबन्धनाप्रस्तुतप्रशंसा । अनयोरसूययैवेदमुत्पन्नमित्यर्थः । अत्र काव्यलिङ्गं च । आर्या वृत्तम् । तदानीं कौशिकी नटनारम्भपिशुनं मृदङ्गनिनादमाकर्ण्य सोल्लासमाह—**हन्तेत्यादि** ॥ हन्तेति हर्षे । **एषा जीमूतेति** ॥ एषा पुष्करस्य मार्जनेत्यन्वयः ।

राजा—देवि, [1]सामवायिका भवामः ।

देवी—(स्वगतम्) अह्रो अविणओ अज्जउत्तस्स ।

अहो अविनय आर्यपुत्रस्य ।

(सर्वे उत्तिष्ठन्ति ।)

विदूषकः—(अपवार्य) [2]भो वअस्स, धीरं गच्छ । [3]मा तत्तहोदिं धारिणिं विसंवाद्इस्ससि ।

[4]भो वयस्य, धीरं गच्छ । मा तत्रभवतीं धारिणीं विसंवादयिष्यासि ।

राजा—

धैर्यावलम्बिनमपि त्वरयति मां मुरजवाद्य[6]रागोऽयम् ।
अवतरतः सिद्धिपथं शब्दः स्वमनोरथस्येव ॥ २२ ॥

(इति निष्क्रान्ताः सर्वे ।)

इति प्रथमोऽङ्कः ।

---

जीमूतो मेघः तस्य स्तनितं विशङ्कन्त इति तथा तैः । अत एव उद्ग्रीवैः दूरोन्नमितकन्धरैः मयूरैः अनुगसितस्य पश्चात्सहशब्दितस्य पुष्करस्य मुरजरूपवाद्यभाण्डमुखस्य । 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे' इत्यमरः । निर्ह्लादिनी गम्भीरस्तनितशङ्काहेतुरिदम् । उपहितेन संयोजितेन मध्यमस्वरेणोत्था उत्पन्ना । उपहितः मध्यमस्वरो यस्यां सा तथा सती, उत्थेति भिन्नं पदं वा । मायूरी मयूरप्रियत्वात्तन्नाम्नी । एषेत्यस्य श्रूयमाणेत्यर्थः । मार्जना नाम नादविशुद्ध्यर्थो वाद्यमुखसंस्कारविशेषः । अत्र तु तदुत्थः शब्दो लक्ष्यते । अश्रूयत पाञ्चजन्य इत्यादिवत् । मनांसि श्रोतृणां सर्वेषामित्यर्थात् । मदयति हर्षयति । अत्र स्तनितविशङ्किभिरित्यत्र भ्रान्तिमदलङ्कारः । उद्ग्रीवैरिति स्वभावोक्तिश्च । प्रहर्षिणी वृत्तम् । प्रकृतविषये देवीमनुकूलयितुं सान्त्वगर्भमाह— **देवीत्यादि** ॥ सामवायिकाः सामाजिकाः वयं भवाम इत्यनेनावयोरत्र समानैव प्रतिपत्तिरिति द्योत्यते । एतावत्पर्यन्तं राज्ञः सर्वमपि वृत्तमन्तर्निधाय सेर्ष्यं स्वयमाह— **अहो इति** ॥ तदानीं त्वराप्रकाशितौत्सुक्यातिरेकं राजानमाकारगोपनविधानाय बोधयति—**भो इति** ॥ **मा विसंवादयिष्यसीति** ॥ कथंचिदेव संवादः कृतः अतोऽस्या विसंवादमाकारादिना

---

१. तस्याः सामाजिकाः २. भो धीरं गच्छह्म । तत्तभोदी धारिणी विसंवादइस्सदि । ३. मा तत्तहोदी धारिणी विसंवादइस्सदि । ४. भोः धीरं गच्छामः । तत्रभवती धारिणी विसंवादयिष्यति । ५. मा तत्र भवती धारिणी विसंवादयिष्यति । ६. रावोऽयम्.

मा जनयेत्यर्थः । अथ चित्रदर्शनादारभ्यानुदिनमाशास्यमानं मालविकासाक्षात्कारमहोत्सवमास्वादयितुमत्युत्सुको राजा तदास्वादनिदानभूतनटनप्रसङ्गपिशुनमृदङ्गनिनादनिशमनेनानन्दितान्तःकरणो गमनसमये धीरताविरोधिनीं त्वरामयीं विक्रियां निराकर्तुमसमर्थः स्वावस्थां नर्मसचिवं प्रत्याह— **धैर्येति** ॥ विकारहेतौ सत्यपि चित्तस्याविकारित्वं धैर्यम् । धैर्यं हि नाम नायकव्यपदेशहेतुरिन्द्रियाविकारकारणं चित्तधर्म इति भोजराजः । तदवलम्बिनमपीति विरोधे । **मां** प्रतिदिनमाशास्यमानमालविकादर्शनमहोत्सवं मामयं श्रवणद्वारा हृदयं प्रविश्यानन्दमुत्पाद्य बहिस्तदनुभावान् पुलकादीनुत्पादयन् मुरजवाद्यस्य रागः रज्यतेऽनेनेति रागः सामाजिकमनोरञ्जनो निनदः । राव इति च पाठः । तन्निनादमुत्प्रेक्षते—**अवतरत इत्यादि** । सिद्धिः फलनिष्पत्तिः सैव पन्थाः तमवतरतः प्राप्नुवतः स्वस्य मनोरथः मालविकासाक्षात्कारगोचरः स एव रथ इति श्लिष्टरूपकम् । प्रत्यासीदत्फलो मनोरथो गम्यमानानुपहतगतिप्रसरत्वादिसाधर्म्येण मार्गावतरद्रथत्वेन रूप्यते । अत एव तत्संबन्धिशब्दत्वेनोत्प्रेक्षा । तन्निमित्तं च गम्यं मृदङ्गनिनदस्य फलासत्तिसूचकत्वं मनोहरत्वादिकं च । श्रोत्राभिरामध्वनिना रथेनेति रघुवंशोक्तेः । रथशब्दस्यापि मनोहारिता प्रसिद्धा । केचित्तु सिद्धिपथं सिद्धिमार्गमवतरतः स्वमनोरथस्य शब्दः मनोरथबोधकः शब्दः मालविकासाक्षात्कारः प्रत्यासन्न इति केनचिदुक्तः शब्द इवेत्यर्थः । शब्दशक्त्या रथसाम्यं च मनोरथे गम्यत इत्याहुः । मां त्वरयति त्वरायुक्तं करोति । धैर्यावलम्बिनमपि त्वरयतीत्यत्र विभावना विशेषोक्तिर्वालङ्कारः । तेन च विरोधेनाभिव्यक्तैर्हर्षचापलौत्सुक्यादिभिः व्यभिचारिभिः परिपुष्टा मालविकालम्बना रतिः प्राधान्येनाभिव्यज्यते । उत्प्रेक्षा चात्र रसाङ्गत्वेन प्रत्यवेक्षिता । आर्या वृत्तम् । अत्र बीजस्य पुनरावर्तनात्समाधानं नामाङ्गम् । सुखागमस्य गम्यत्वात् प्राप्तिश्च । उत्तराङ्कार्थबिन्दूपक्षेपश्चायं श्लोक इति सर्वं शिवम् ॥

॥ इति सारार्थदीपिकायां मालविकाग्निमित्रव्याख्यायां प्रथमोऽङ्कः ॥

# द्वितीयोऽङ्कः ।

(ततः प्रविशति संगीतरचनायां कृतायामासनस्थः सवयस्यो राजा धारिणी परिव्राजिका विभवतश्च परिवारः ।)

**राजा**—भगवति, अत्रभवतोराचार्ययोः कतरस्य प्रथममुपदेशं द्रक्ष्यामः ।

**परिव्राजिका**—ननु समानेऽपि ज्ञानवृद्धभावे [1]वयोवृद्धत्वाद्गणदासः पुरस्कारमर्हति ।

**राजा**—मौद्गल्य, एवमत्रभवतोरावेद्य नियोगमशून्यं कुरु ।

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

(प्रविश्य)

**गणदासः**—देव, शर्मिष्ठायाः कृतिर्लयमध्या [2]चतुष्पादा । तस्यास्तु छलिकप्रयोगमेकमनाः श्रोतुमर्हति देवः ।

---

॥ अथ द्वितीयोऽङ्कः ॥

अथ 'अङ्कावतारस्त्वङ्कान्ते पात' इत्यादिलक्षितेनाङ्कावताराख्येनार्थोपक्षेपकेण पात्रप्रवेशमाह—**तत इति** ॥ **विभवत इति** ॥ विभवानुरूपेणेत्यर्थः । अस्मिन्नङ्के पूर्वाङ्कोपक्षिप्तो नायिकाया अभिनयः प्रधानतया वर्ण्यते । प्रतिकृतिदर्शनेन नायके गुणश्रवणेन नायिकायां चाङ्कुरिताया रतेः साक्षाद्दर्शनेन परिपोषश्चेत्याद्यवधेयम् । भगवतीत्यादिवचनमाकर्ण्य स्वाभिलषितानुगुणमाह—**नन्वित्यादि** ॥ **वयोवृद्धत्वादिति** ॥ वयोऽधिकत्वादिति च पाठः । **पुरस्कारं** प्रथमप्रयोगप्रदर्शनरूपं सत्कारम् । 'पुरस्कृतः पूजित' इत्यमरः । **मौद्गल्येति** ॥ **एवमिति** ॥ गणदास एव प्रथममुपदेशं दर्शयत्वितीत्यर्थः । **नियोगमिति** ॥ स्वनियुक्ताधिकारमित्यर्थः । **अशून्यं कुरु** अनुतिष्ठ । यद्वा नियुज्यतेऽस्मिन्निति नियोगः । यत्र कञ्चुकी नियुक्तस्तत्स्थानमित्यर्थः । अशून्यं कुरु तत्र संनिहितो भवेत्यर्थः । भगवतीत्यादिना गणदासः पुरस्कारमर्हतीत्यन्तेन प्रतिपादितं राज्ञ उपायेन मालविकादर्शनप्रवर्तनं प्रयत्नो नाम द्वितीयावस्था । अतो बिन्दुप्रयत्नयोः समन्वयात्प्रतिमुखसंधिरत्रेति बोध्यम् । **देवेत्यादि** ॥ शर्मिष्ठा नाम ययातेर्भार्या तस्याः कृतिः कविता । लयेन तौर्यत्रिकसाम्येन मध्या मध्यमानयुक्ता शृङ्गारानुगुणमध्यलयसंयुक्तेत्यर्थः । तदुक्तं भरतेन 'शृङ्गारहास्ययोः मध्यलय' इति ॥ **चतुष्पादेति** ॥ चतुष्पदेति

---

१. वयोऽधिकत्वात् २. चतुष्पदास्ति । तस्याश्चतुर्थवस्तुनः (कं) प्रयोगमेकमनाः

**राजा**— आचार्य[1]बहुमानादवहितोऽस्मि ।

(निष्क्रान्तो गणदासः ।)

**राजा**—(जनान्तिकम् ।) वयस्य,

नेपथ्यगृह[2]गतायाश्चक्षुर्दर्शनसमुत्सुकं तस्याः ।
संहर्तुमधीरतया व्यवसितमिव मे तिरस्करिणीम् ॥ १ ॥

**विदूषकः**—(अपवार्य) उवट्ठिदं णअणमहु संणिहिदमक्खिअं अ । ता अप्पमत्तो दाणिं पेहि[3] ।

उपस्थितं नयनमधु संनिहितमाक्षिकं च । तदप्रमत्त इदानीं पिब[4] ।

(ततः प्रविशत्याचार्यप्रत्यवेक्ष्यमाणाङ्गसौष्ठवा मालविका ।)

**विदूषकः**—(जनान्तिकम् ) पेक्खदु भवं । ण खु से पडिच्छन्दादो परिहीअदि महुरदा ।

---

पाठे पदशब्दस्य वृत्ततुरीयांशोऽर्थः । तस्याः प्रयोगमिति संबन्धः । **छलिकमिति** ॥ एतच्च नृत्यमन्यदीयावस्थाभिनयच्छलेनात्मनोऽवस्थां सूचयितुं प्रयुज्यत इति छलिकमित्युच्यते । एतल्लक्षणं पूर्वमुक्तम् । एतत्कल्पनं मालविकया स्वाभिलाषस्य नायकं प्रति स्फुटीकरणार्थमिति स्पष्टम् । **श्रोतुमिति** । दर्शनस्याप्युपलक्षणम् । आचार्यबहुमानादित्यनेनात्मौत्सुक्यस्य गोपनम् । जनान्तिकं नर्मसचिवं प्रत्याह— **वयस्य नेपथ्येति** ॥ नेपथ्यगृहं यवनिकान्तरितं वर्णिकापरिग्रहस्थानं गतायाः इति समुत्सुकत्वे हेतुः । **तस्याः** आलेख्ये दृष्टाया मालविकायाः । तस्या इत्यनेनानुस्मृतिर्द्योत्यते । दर्शने समुत्सुकमत्यन्तोत्सुकमिति हेतुगर्भम् । कालाक्षमत्वमौत्सुक्यमित्यादि तत्स्वरूपं बोध्यम् ॥ **मे** नित्यं प्रार्थ्यमानतद्दर्शनस्य मम चक्षुः **अधीरतया** विलम्बासहिष्णुतया । अधीरता चौत्सुक्यानुभावः । **तिरस्करिणीं** नेपथ्यगृहावरणभूतां यवनिकाम् । **संहर्तुं** अपसारयितुं **व्यवसितम्** उद्युक्तमिवेत्युत्प्रेक्षा । तन्निमित्तं च चक्षुषस्तिरस्करिण्यामासङ्गः । उत्प्रेक्षया चौत्सुक्यजनितत्वरातिशयो द्योत्यते । आर्या वृत्तम् । अत्रेष्टार्थविषयेकेच्छाया गम्यमानत्वाद्विलासो नामाङ्गम् । तच्छ्रुत्वा राजानं प्रोत्साहयन्नाकारगोपनस्य कर्तव्यत्वं च सूचयन्नाह—**उपस्थितमिति** ॥ नयनयोर्मधु क्षौद्रं तद्वदास्वाद्यमिति भावः । **उपस्थितं** समीपप्राप्तम् । संनिहिता माक्षिका यस्य तच्च भवति । अत्र मधुत्वेन मालविका माक्षिकात्वेन तदास्वादविरोधिनी धारिणी चाध्यवस्यत इत्यतिशयोक्तिः ॥ **तदिति** ॥ तद्धारिणीरूपायाः मक्षिकायाः संनिधानात् **अप्रमत्तः** सावधानः सन् । यथा धारिण्याः शङ्का न भवेत्तथेत्यर्थः । **इदानीं पिब** सादरमनुभव । तदिति शेषः । **ततः प्रविशतीत्यादि** ॥ सौष्ठवं नामाङ्गानां शोभनः अवस्थानविशेषः ।

---

१. आचार्येति भिन्नं पदम् २. नेपथ्यपरिगतायाः ३. पेक्ख ४. पश्य.

प्रेक्षतां भवान्। न खल्वस्याः प्रतिच्छन्दात्परिहीयते मधुरता।

राजा—(अपवार्य) वयस्य,

चित्रगतायामस्यां कान्तिविसंवादशङ्कि मे हृदयम्।
संप्रति शिथिलसमाधिं मन्ये येनेयमालिखिता॥ २॥

गणदासः—वत्से, मुक्तसाध्वसा सत्त्वस्था भव।

राजा—(आत्मगतम्) अहो सर्वस्थानानवद्यता[1] रूपस्य[2]। तथाहि।

यथोक्तं— 'अनुच्चनीचचलतामङ्गानां समपादताम्। कटिकर्परशीर्षांसकण्ठानां समरूपताम्॥ रम्यां प्रतीकविश्रान्तिमुरसश्च समुन्नतिम्। अभ्यासोपहितां प्राहुः सौष्ठवं नृत्तवेदिनः॥' इति। तद्दर्शने राजानमभिमुखीकरोति— **प्रेक्षतामिति**॥ प्रेक्षतां प्रकर्षेण पश्यतु। **प्रतिच्छन्दात्** आलेख्यप्रतिकृतेः। **मधुरता** सौन्दर्यम्। अस्या आकृतेः प्रतिकृत्यपेक्षया सौन्दर्यस्य नैव हानिरित्यर्थः। अत्र काक्वा प्रश्नः। न केवलमपरिहानिः किंत्वाधिक्यमपीत्याह— **चित्रेति**॥ **मे** सूक्ष्मग्रहणा-दिकुशलस्य मम **हृदयं चित्रगतायामस्यां** दृष्टायामिति शेषः। यद्वा अस्या-मित्यस्य कान्तीत्यनेन संबन्धः। कान्तिपदेन सौन्दर्यमुपलक्ष्यते। कान्तेः विसंवादः। एकत्र दृष्टस्यान्यत्रदर्शनं सवादः तदभावो विसंवादः। विपर्यास इति यावत्। तं शङ्कत इति तथा अभूत्। प्रायश्चित्रकारा अधिकं लिखन्तीति प्रसिद्ध्या चित्रस्थप्रतिबिम्बे या कान्तिः दृष्टा तादृशी बिम्बभूतायामस्यां न भवतीति हृदयेन शङ्कितमित्यर्थः। **इयं** सौन्दर्यादिगुणातिशयशालित्वेन दृश्यमाना **येनालिखिता**। तमिति शेषः। शिथिलः अदृढः समाधिः अस्याः स्वरूपध्यानं यस्य तम्। **संप्रति** अस्याः साक्षाद्दर्शनकाले। **मन्ये** ऊहे। चित्रकारो हि सावधानस्तत्तद्वस्तुस्वरूपं मनसा विचार्य चित्रे भङ्ग्या लिखति। अस्याः कान्तेः चित्रे परिपूर्त्यभावात् चित्रका-रस्यैतत्स्वरूपध्यानं दृढं न जातमिति मन्य इत्यर्थः। अत्र चित्रकारस्य समाधिशै-थिल्योक्त्या तत्कार्यं चित्रे कान्तेः परिपूर्णतया विलेखनाभावरूपं प्रतिपाद्यत इति कारणनिबन्धनाप्रस्तुतप्रशंसा। ततश्च मालविकायाश्चित्रप्रतिकृत्यपेक्षया कान्त्यतिशयो द्योत्यते। आर्या वृत्तम्॥ अथ मालविकाया वस्तुतो झटिति राजदर्शनेन जनितं कम्पादिसात्त्विकविकारमवलोक्य तं सामाजिकदर्शनजनितं मत्वा गणदास आह— **वत्स इति**। **मुक्तसाध्वसा** सभाकम्परहिता भव। अत्रोपायमाह— **सत्त्वस्थेति**॥ अविकृतेत्यर्थः। यथोक्तं— 'चित्तस्या-विकृतिः सत्त्वं विकृतेः कारणे सति' इति। सत्त्वस्था च भवेत्यन्वयः॥ अथ मालविकाया लोकोत्तरसौन्दर्यादिविशिष्टान्मुखाद्यवयवान्साक्षात्कुर्वन्सविस्मयः स्व-यमाह— **अहो इत्यादि**॥ अस्या इति शेषः। **रूपस्य** आकृतेः वपुषो वा। **सर्वेषु**

१. सर्वास्ववस्थास्वनवद्यता २. रूपविशेषस्य.

दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।
मध्यः पाणिमितोऽ[1]मितं च जघनं पादावरालाङ्गुली
छन्दो नर्तयितुर्यथैव मनसि श्लिष्टं तथास्या वपुः ॥३॥

मालविका—(उपगानं कृत्वा चतुष्पादवस्तुकं गायति ।)

दुल्लहो पिओ मे तस्सिं भव हिअअ णिरासं
अह्मो अपङ्गओ मे प[2]प्फुरइ किं वि वामओ ।
एसो सो चिरदिट्ठो क[3]हं उवणइदव्वो
णाह मं पराहीणं तुइ ग[4]णअ सतिण्हम् ॥ ४ ॥

दुर्लभः प्रियो मे तस्मिन् भव हृदय निराशम्
अहो अपाङ्गको मे प्र[5]स्फुरति किमपि वामकः ।
एष स चिरदृष्टः क[6]थमुपनेतव्यो
नाथ मां पराधीनां त्वयि ग[7]णय सतृष्णाम् ॥ ४ ॥

इति यथारसमभिनयति ।

---

स्थानेष्ववयवदेशेषु अनवद्यता निर्दोषता । सौन्दर्यमिति यावत् । अहो इति विस्मये । उक्तमुपपादयति—**दीर्घाक्षमिति** ॥ अस्या इत्यस्य वदनमित्यादिभिः संबन्धः । वदनं दीर्घे अक्षिणी यत्र तत् । तथा शरदिन्दोः कान्तिर्यत्र तत् । कान्त्यतिशयद्योतनाय शरद्ग्रहणम् । बाहू अंसयोः नतौ नतांसौ । उरः निबिडौ सान्द्रौ परस्परसंश्लिष्टाविति यावत् उन्नतौ च स्तनौ यत्र तत् । अत एव **संक्षिप्तम्** अन्यावकाशाभावात् स्वल्पमेवेत्यर्थः । **पार्श्वे** 'पार्श्वमस्त्री तयोरध' इत्यमरः । **प्रमृष्टे** श्लक्ष्णीकृते । इवेत्युत्प्रेक्षायाम् । **मध्यः** पाणिना मितः मुष्टिग्राह्यः । **जघनम् अमितम्** अपरिमितं विशालम् । नितम्बीति पाठे प्रशस्तनितम्बशालीत्यर्थः । **पादौ** । अराला वक्रा अङ्गुलयो ययोस्तौ । एवमवयवानां सौष्ठवरूपं सौन्दर्यं प्रतिपाद्य तस्य प्रकृतोपयोगितां चाह— **छन्द इति** ॥ अत इत्यर्थात् । **नर्तयितुः** नृत्ताचार्यस्य अथ च कामिनो मम मनसि **छन्दः** अभिप्रायः **यथा** यत्प्रकारो भवति । **अस्या वपुस्तथैव** तत्प्रकारेणैव **श्लिष्टं** सङ्गतम् । अनेन श्लोकेनालम्बनातिशयः ख्यापितः । शरदिन्दुकान्तीत्यत्र निदर्शनोपमा वा । प्रमृष्टे इवेत्युत्प्रेक्षा । मध्यः पाणिमित इत्यादावतिशयोक्तिः । पूर्ववाक्यार्थस्यान्त्यपादार्थोपपादकत्वात् काव्यलिङ्गं चेत्येषामत्र संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् । **उपगानं कृत्वेति** ॥ गानात्प्राक् कर्तव्यं रागानुगतं स्वरपरिवर्तनमुपगानम् । **चतुष्पाद-**

---

१. नितम्बि २. परिप्फुरइ किंपि वामो ३. कहं उण उवणइदव्वो ४. परिगणअ ५. परिस्फुरति किमपि वामः ६. कथं पुनरुपनेतव्यः ७. परिगणय.

**विदूषकः**—(जनान्तिकम्) भो वअस्स, चउप्पदवत्थुअं दुवारीकदुअ तुइ उवक्खित्तो[1] विअ अप्पा तत्तहोदीए ।

भो वयस्य, चतुष्पदवस्तुकं द्वारीकृत्य त्वय्युपक्षिप्त[2] इवात्मा तत्रभवत्या ।

**राजा**—(जनान्तिकम्) सखे, एवमेव ममापि हृदयम्[3] । अनया खलु

जनमिममनुरक्तं विद्धि नाथेति गेये
वचनमभिनयन्त्या स्वाङ्गनिर्देशपूर्वम् ।
प्रणयगतिमदृष्ट्वा धारिणीसंनिकर्षा-
दहमपि सुकुमारप्रार्थनाव्याजमुक्तः ॥ ५ ॥

(मालविका गीतान्ते निष्क्रमितुमारब्धा ।)

---

**वस्तुकमिति** ॥ वस्त्वेव वस्तुकं प्रबन्धम् । यथोक्तं — 'निबन्धो रूपकं वस्तु प्रबन्धस्याभिधात्रयम्' इति । **दुर्लभ इति** ॥ कामपरवशाया नायिकायाः स्वावस्थाबोधनमिदम् । प्रियो दुर्लभः । अतः हे हृदय त्वं **तस्मिन्** प्रिये विषये **निराशं भव** दुर्लभस्य वस्तुनः प्राप्त्याशाया निष्फलत्वान्निरभिलाषं भव । अथ तत्काले प्रियप्राप्तिसूचकं वामनयनस्फुरणरूपं सुनिमित्तमुपलभ्य सविस्मयमाह— **अहो इति** ॥ प्रियप्राप्तिरूपफलस्य दुर्लभत्वात् तत्सूचकस्य निमित्तस्योपलब्धेश्च विस्मयः । **वामकः अपाङ्गकः** नेत्रप्रान्तः **किमपि** अधिकं **स्फुरति** अविच्छिन्नं स्पन्दते । लटा फलस्यासन्नत्वं द्योत्यते । स्त्रीणां वामनयनस्फुरणं प्रियलाभसूचकमिति निमित्तज्ञाः । सुनिमित्तलाभेनोपायं चिन्तयन्त्याह— **एष इति** ॥ **एषः** मनसि प्रत्यक्षायमाणः **चिरदृष्टः सः** प्रियः **कथं** केनोपायेन **उपनेतव्यः** प्राप्तव्यः । एवमात्माभिलाषादिकं प्रदर्श्य प्रार्थयते— **नाथेति** ॥ संबुद्ध्यानन्यशरणताऽऽत्मनो द्योत्यते । **पराधीनां मां त्वयि सतृष्णां** साभिलाषां **गणय** मन्यस्व । अत्राद्ये पादे इष्टविरहदुःखहेतुको निर्वेदः, द्वितीये सुनिमित्तलाभहेतुको हर्षः अत एवौत्सुक्यं च, तृतीये चिन्ता, चतुर्थे दैन्यं चेत्येते भावा व्यज्यन्ते । तैः परिपुष्टा रतिश्चेत्ययोगविप्रलम्भो रसो ध्वन्यते । **भो वयस्येति** ॥ **उपक्षिप्तः** न्यस्त **इव** । अनया चतुष्पदवस्त्वभिनयद्वारा भवन्तं प्रत्यात्मार्पणं कृतमिव मे प्रतिभातीत्यर्थः । तदुक्तमनुवदति—**सखे इत्यादि** ॥ तवेव ममापि प्रतिभानादावयोः सखित्वमुपपन्नमिति संबुद्ध्या प्रकाश्यते । ममापि हृदयमेवमेवेति संबन्धः । उक्तमेव विवृणोति—**अनया खलु जनमिति** ॥ हे नाथ, अनेन संबोधनेन रक्ष्यतामयं जन इति प्रार्थना द्योत्यते । त्वमिमं जनं माम् । इमं जनमित्युक्त्या स्वस्य पराधीनत्वादिकं द्योत्यते । **अनुरक्तं** त्वद्विषयकानुरागखिन्नं **विद्धि** जानीहि । इतीत्यस्य

---

१. उवट्ठाविदो अप्पा २. उपस्थापित आत्मा ३. एवमावयोर्हृदयम्.

**विदूषकः**—भोदि, चिट्ठ। किंवि वो विसुमरिदो कमभेदो१।
भवति, तिष्ठ। किमपि वो विस्मृतः क्रमभेदः२।
**गणदासः**—वत्से, उपदेशविशुद्धा यातुमर्हसि।३

(मालविका निवृत्य स्थिता।)

**राजा**—(आत्मगतम्) [अहो], सर्वास्ववस्थासु चारुता शोभान्तरं पुष्यति। तथा हि।

---

वचनमित्यत्रोक्त इत्यत्र च संबन्धः। **इति** इत्यर्थकम् **गेये वचनं** दुर्लभ इत्यादिगेयप्रबन्धघटकं नाथेत्यादिवाक्यम्। स्वाङ्गस्य निर्देशः पूर्वो यत्र तत्तथा। स्वाङ्गं हस्तेन निर्दिश्येत्यर्थः। अभिनयन्त्येति हेतुगर्भम्। अत्र स्वाङ्गशब्देन राज्ञः मालविकायाश्चाङ्गं विवक्षितम्। नाथ त्वमित्यनयोरभिनये राजशरीरस्य, इममित्याद्यभिनये मालविकाशरीरस्य च निर्देशः। **प्रणयेति**॥ प्रणयस्य मद्विषयकस्यास्याः प्रेम्णः गतिर्मन्मनसि प्रवेशः। मत्कर्तृकं ज्ञानमिति यावत्। **अदृष्ट्वा** अज्ञात्वा। अहमस्या अनुरागं बुद्धवानित्यज्ञात्वेत्यर्थः। इदमुक्त इत्यत्र हेतुः। राज्ञो धारिणीसंनिकर्षश्च व्याजेनोक्तौ हेतुः। यद्वा मालविकायाः धारिणीसंनिकर्षाद्धेतोः प्रणयस्य स्वानुरागाविष्करणपूर्वकरक्षणप्रार्थनस्य गतिमुपायान्तरम् अदृष्ट्वा अज्ञात्वेत्यर्थः। केचित्तु प्रणयस्यैतद्विषयकस्य मन्निष्ठस्य प्रेम्णः गतिं गमकमदृष्ट्वा मन्निष्ठानुरागमनुभावमुखेनानालक्ष्येत्यर्थ इति व्याचक्षते। सुकुमारा सौकुमार्यरूपकाव्यगुणविशिष्टा या प्रार्थना अभिलाषबोधकं वाक्यं नाथेत्यादिरूपं तस्या व्याजेन नायकान्तरं प्रत्यनुकार्यनायिकान्तरप्रार्थनाव्याजेनेत्यर्थः। अहमुक्त इवेत्युत्प्रेक्षायाम्। इयं नियतं धारिणीसंनिकर्षात् स्वप्रणयमुपायान्तरेण मां बोधयितुमपारयन्ती नाथेत्यस्याभिनये मदाभिमुख्येन निर्देशाज्जनमिममित्यादिकं मामुक्तवतीति संभावयामीत्यर्थः। अत्र सापह्नवोत्प्रेक्षा काव्यलिङ्गं चालङ्कारः। हर्षो भावश्च व्यङ्ग्यः। मालिनी वृत्तम्। मालविकाया निष्क्रमणस्य राज्ञोऽनिष्टतया तां तत्र कंचित्कालं स्थापयितुं नर्मसचिव आह—**भवतीत्यादि**। किमपीत्यव्ययम्। कश्चिदित्यर्थः। **क्रमभेदः** आचारक्रमभेदः। प्रक्ष्यामि तमिति शेषः। तद्वचनेनाभिनयस्य कापि न्यूनता जातेति मत्वाह—**वत्स इति**॥ उपदेशे नाट्यप्रयोगे विषये विशुद्धा क्रमविस्मरणरूपदोषरहिता। स्थितां तां सानुरागमवलोकयन् सविस्मयमाह—**अहो इति**॥ **सर्वास्ववस्थासु** नर्तनावस्थानादिषु **चारुता** स्वाभाविकं रामणीयकं **शोभान्तरं** शोभाविशेषं **पुष्यति** पोषयति। वस्तूनामिति शेषः। उक्तं सामान्यं समर्थयते—**वाममिति**। सन्धौ मणिबन्धदेशे स्तिमितं निश्चलतयावस्थितं वलयं यत्र तत्। वामं हस्तं नितम्बे न्यस्य द्वितीयं

---

१. तं दाव पुच्छिस्सं २. तं तावत् प्रक्ष्यामि ३. भद्रे; वत्से स्थीयताम्। उपदेशविशुद्धा यास्यसि।

वामं संधिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम् ।
पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्तादस्याः स्थितमतितरां कान्तमृज्वायतार्धम् ॥६॥

देवी—णं गोदमवअणं वि अज्जो हिअए करेदि ।
ननु गौतमवचनमप्यार्यो हृदये करोति ।

गणदासः—देवि, मा मैवम् । देवप्रत्ययात्संभाव्यते सूक्ष्मदर्शिता गौतमस्य ।

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।
पङ्कच्छिदः फलस्येव निकर्षेणाविलं[1] पयः ॥ ७ ॥

(विदूषकं विलोक्य) शृणुमो विवक्षितमार्यस्य ।

---

दक्षिणं हस्तं स्रस्तं शिथिलं यथा तथा मुक्तं लम्बितम् अत एव श्यामाविटपेन सदृशं कृत्वा । एवमृतुसंहारेऽपि 'श्यामालताः कुसुमभारनतप्रवालाः स्त्रीणां हरन्ति धृतभूषणबाहुकान्तिम्' इति । न्यस्य कृत्वेत्यनयोः स्थितमित्यत्र संबन्धः । पादाङ्गुष्ठेन आलुलितानि ईषच्चालितानि कुसुमानि पूर्वं विकीर्णानि पुष्पाणि यत्र तस्मिन् । कुट्टिमे इन्द्रनीलादिभिः निबद्धायां भुवि पातिते अक्षिणी यस्मिंस्तत् । लज्जानुभावोऽयम् । ऋजु अवक्रम् आयतं चार्धं मध्योपरितनभागः यत्र तत् । अनेन स्तनादीनां स्फुटता द्योत्यते । अर्धशब्देनाधःशरीरार्धभागो विवक्षितः । उपरितनशरीरस्य स्तनभारेण स्तोकनम्रत्वादिति केचित् । **अस्याः स्थितं** निश्चलावस्थानं **नृत्तात्** नृत्तमपेक्ष्य **अतितरां कान्तं** मनोहरम् । अत्र स्वभावोक्तिः । तत्स्थितस्य वर्णनावशेन सहृदयानां प्रत्यक्षायमाणत्वात् भाविकं चालङ्कारः । अत्रापि हर्षादयो भावाः । अत्र वाक्यस्य विशेषवत्त्वात् पुष्पं नामाङ्गम् । मन्दाक्रान्ता वृत्तम् । तस्याः स्थितिमसहमानाह— **नन्विति** । गौतमवचनमपीत्यपिशब्देन तद्वचनस्याश्रद्धेयत्वं द्योत्यते । तेन गौतमस्यानभिज्ञत्वं च । **हृदये करोति** अङ्गीकरोति । नन्विति प्रश्ने । अनुचितमिदमिति भावः । **देवेति** । देवस्य प्रत्ययात् गौतमे विश्वासात् । अनेन विश्वासकार्यं सर्वदा संसर्गित्वं बोध्यते । उक्तमर्थं सदृष्टान्तं सामान्येन समर्थयते— **मन्द इति** ॥ **विपश्चितो** विदुषः **संसर्गेण मन्दः** अज्ञो जनः अपि किमुतान्य इत्यपिशब्दार्थः । यद्वा अपीति विरोधे । **पङ्कच्छिदः फलस्य** कतकवृक्षफलस्य **निकर्षेण** नितरां योजनेन । निकषेणेति च पाठः । घर्षणेनेत्यर्थः । **आविलं** कलुषम् । मान्द्यस्य

---

१. निकषेण.

**विदूषकः**—(गणदासं विलोक्य) सक्खिणिं दाव पुच्छ। पच्छा जो मए कमभेदो लक्खिदो तं भणिस्सं।

साक्षिणीं तावत्पृच्छ। पश्चाद्यो मया क्रमभेदो लक्षितस्तं भणिष्यामि।

**गणदासः**—भगवति, यथादृष्टमभिधीयताम्। गुणो वा दोषो वा।

**परिव्राजिका**—यथादर्शनं सर्वमनवद्यम्। कुतः।

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमनुगतस्तन्मयत्वं रसेषु।
शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं नुदति विषयाद्रागबन्धः स एव॥८॥

प्रतिबिम्बं कालुष्यम्। **पयः** जलम्। इवेत्युपमायाम्। **अमन्दतां** विद्वत्त्वं स्वच्छत्वं च। **एति** प्राप्नोति। उपमासंसृष्टोऽर्थान्तरन्यासः विकस्वरो वालङ्कारः। मतिर्भावः। पथ्यावक्त्रं वृत्तम्। **यथादर्शनमिति**॥ यथा दृष्टं तथेत्यर्थः। अभिधीयत इति शेषः। यद्वा यथादर्शनं शास्त्रमनतिक्रम्य सर्वमभिर्नीतं सर्वं अनवद्यं निर्दोषम्॥ **अङ्गैरिति**॥ अनयेति शेषः। अन्तः अन्तर्भागे निहितानि विन्यस्तानि वचनानि येषां तैः। सम्यगर्थबोधकत्वनिमित्तेनान्तर्निहितवचनत्वमङ्गानामुत्प्रेक्ष्यत इति गम्योत्प्रेक्षा। **अङ्गैः** पताकादिमुद्राविशिष्टहस्ताद्यवयवैः करणैः। **अर्थः** दुर्लभ इत्यादिगेयप्रबन्धार्थः **सम्यक् सूचितः** प्रकाशितः। अनेन वाक्येन हस्तमुद्राशुद्धिः प्रदर्शिता। **पादन्यासः** अस्या नृत्ताद्याश्रयः पादप्रक्षेपः। **लयं** कालक्रियासाम्यम्। **अनुगतः** अनुसृतः। अनेन नृत्तशुद्धिरुक्ता। **रसेषु** रस्यत इति रसः रतिर्निर्वेदादिः तेषु तदभिनयेष्वित्यर्थः। सत्सु। **तन्मयत्वम्** अनुकार्यतादात्म्यापत्तिः। अस्या भवति। अनेन सात्त्विकाभिनयशुद्धिः दर्शिता। शाखा आङ्गिकः योनिरुत्पत्तिसाधनं यस्य सः। यथोक्तमाचार्यभरतेन— 'आङ्गिकस्तु भवेच्छाखा' इति। **अभिनयः मृदुः** लघुः अभ्यासातिशयादनायासकृत इत्यर्थः। अनेनाङ्गिकाभिनयशुद्धिः प्रदर्शिता। अथ सर्वमुपसंहृत्याह— **तद्विकल्पेति**॥ तेषामङ्गैरित्यादिना उक्तानां हस्तमुद्रादीनां ये विकल्पाः विविधकल्पनाः प्रभेदा इति यावत्। तेषामनुवृत्तौ अनुषक्ततया वृत्तौ सत्यां **भावः** अभिनीतो रतिनिर्वेदादिः। हस्तमुद्रादिसहितभावाभिनय इत्यर्थः। **भावं** सामाजिकानां मनः **विषयात् नुदति** स्वस्मिन् प्रेरयति विषयान्तराद्व्यावर्त्य स्वस्मिन्नासञ्जयतीत्यर्थः। **अस्या रागबन्धः** स्थिरः कृतो मुखरागः। **सः** प्रसिद्ध एव भरतशास्त्रोक्त एवेत्यर्थः। यथाह भगवान् भरतः— 'अथातो मुखरागस्तु चतुर्धा स च

१. कोसिइं २. कौशिकीं.

**गणदासः**—देवः कथं वा मन्यते ।

**राजा**—वयं स्वपक्षे शिथिलाभिमानाः संवृत्ताः ।

**गणदासः**—अद्य नर्तयितास्मि ।

उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः ।
श्यामायते न [1]युष्मासु यः काञ्चनमिवाग्निषु ॥ ९ ॥

**देवी**—दिट्ठिआ [2]परिक्खआराहणेण अहिअं वड्ढइ अज्जो ।
दिष्ट्या [3]परीक्षकाराधनेनाधिकं वर्धत आर्यः ।

**गणदासः**—देवी[4]परिग्रहश्च मे वृद्धिहेतुः । (विदूषकं विलोक्य) गौतम, वदेदानीं यत्ते मनसि वर्तते ।

**विदूषकः**—पुढमोपदेसदंसणे पुढमं बह्मणस्स पूआ कादव्वा । सा

---

कीर्तितः । स्वाभाविकः प्रसन्नश्च रक्तः श्यामोऽर्थसंश्रयः ॥ प्रसन्नस्त्वद्भुते कार्यो हास्यशृङ्गारयोस्तथा ।' इति । अनेन मुखरागशुद्धिश्च प्रदर्शिता । नाट्यशास्त्रविदामेव गोचरोऽयं श्लोको यथामति विवृतः । अत्रायं ध्वनिः । अनयान्तर्निहितवचनैरङ्गैः अर्थः स्वाभिप्रायः सम्यक्सूचितः । शर्मिष्ठावचनाभिनयव्याजेन स्वार्थ एव प्रकाशित इत्यर्थः । अतः पादन्यासादिः भावाभिनयान्तः सर्वो मृदुः निस्सारः सामाजिकस्य राज्ञो हृदयाकर्षणे अप्रयोजकः किन्त्वस्याः स एव रागबन्धः निर्व्याजः स्थिरोऽनुराग एव भावं राज्ञो मनः विषयान्नुदति आकर्षतीति । अतश्चास्या अप्यस्मिन्ननुरागसद्भावात् 'अन्योन्यरागसुभगस्य सुमानुषस्य' इति न्यायेनानयोः सङ्घटनं सुकरमिति मर्मज्ञं विदूषकं प्रति च द्योत्यते । मन्दाक्रान्ता वृत्तम् । अथ राजाभिप्रायं पृच्छति—**देव इति** ॥ **स्वपक्ष इति** ॥ स्वपक्षे स्ववर्ग्ये । हरदत्त इति यावत् । शिथिलः न्यूनः अभिमानः उत्कर्षबुद्धिर्येषां ते । अनेन परपक्षोत्कर्षस्य स्वसंमतत्वं प्रकाश्यते । ससंतोषमाह— **अद्येति** ॥ **नर्तयितास्मि** नृत्ताचार्यपदार्होऽस्मि । अत्र हेतुं स्वीयोपदेशशुद्धिं सामान्येनाह—**उपदेशमिति** ॥ सन्तो विद्वांसः उपदेशिनस्तमुपदेशं शुद्धं निर्दोषं विदुः जानन्ति । क इत्यत्राह—**श्यामेति** ॥ अग्निषु काञ्चनमिव यः उपदेशः युष्मासु विद्यातिशयवत्सु भवत्सु । विद्वत्स्विति च पाठः । न श्यामायते न दुष्टो भवति । लोहितादित्वात् क्यष् । यथा रघौ—'तं सन्त' इत्यादि । अत्रोपमासंसृष्टा सामान्यनिबन्धनाप्रस्तुतप्रशंसा । हर्षो भावः । अनुष्टुप् छन्दः । देवी तमभिनन्दति—**दिष्ट्येति** ॥ परीक्षकेत्यत्र परिषदिति च पाठः । **देवीपरिग्रहश्चेति** ॥ न केवलं परीक्षकाराधनमेवेत्यर्थः । स्वविवक्षितं हास्या-

---

१. विद्वत्सु २. अपरिक्खदाराहणेण अज्जो वड्ढइ । ३. परिषदाराधनेन; अपरिक्षताराधनेनार्यो वर्धते ४. परिग्रह एव वृद्धिहेतुः ।

णं वो विसुमरिदा ।

प्रथमोपदेशदर्शने प्रथमं ब्राह्मणस्य पूजा कर्तव्या । सा ननु वो विस्मृता ।

परिव्राजिका—अहो प्रयोगाभ्यन्तरः प्रश्नः ।१

(सर्वे प्रहसिताः । मालविका स्मितं करोति ।)

राजा—(आत्मगतम्) उपात्तसारश्चक्षुषा मे स्वविषयः । यदनेन

स्मयमानमायताक्ष्याः किंचिदभिव्यक्तदशनशोभि मुखम् ।
असमग्रलक्ष्यकेसरमुच्छ्वसदिव पङ्कजं दृष्टम् ॥ १० ॥

गणदासः—महाब्राह्मण, न[2] खलु प्रथमं नेपथ्यप्रदर्शनमिदम्[3] । अन्यथा कथं त्वां दक्षिणीयं न तर्पयिष्यामः[4] ।

---

नुगुणमाह—**प्रथमेति** ॥ अत्र परिहासस्य गम्यमानत्वान्नर्मनामकं संध्यङ्गम् । सोपहासमाह—**अहो इति** ॥ प्रयोगस्य आभ्यन्तरः अन्तर्गतार्थविषयः ॥ **सर्वे इति** ॥ अत्र शृङ्गारानुगुणो हास्यः । स्मयमानां मालविकां सादरमवलोक्य स्वचक्षुषोः कृतार्थतां स्वयमाह—**उपात्तेति** ॥ **मे चक्षुषा** कर्त्रा **स्वविषयः** चक्षुर्विषयः । उपात्तः सारो यस्मात् यस्य वा सः । चक्षुः स्वविषयसारांशं गृहीतवदित्यर्थः ॥ द्रष्टव्यं दृष्टवदिति यावत् । अनेन चक्षुषः कृतार्थता द्योत्यते । **अनेनेति** ॥ चक्षुषा इत्यर्थः ॥ **स्मयेति** ॥ स्मयमानं मन्दं हसत् अत एव किंचिदभिव्यक्तैः रदनैः दन्तैः शोभत इति तथा । आयताक्ष्या इत्यनेनाक्षिभ्यामपि मुखस्य मनोहरत्वं द्योत्यते । मुखं उच्छ्वसत् विकसत् असमग्रं यथा तथा लक्ष्याः ईषल्लक्ष्या इत्यर्थः केसराः यत्र तत् । पङ्कजमिव दृष्टमित्युपमया रामणीयकातिशयः सूच्यते । स्मितादीनां विकासादीनां च बिम्बप्रतिबिम्बभावो बोध्यः । आर्या वृत्तम् ॥ **महाब्राह्मणेति** ॥ इदं दक्षिणीयत्वोपपादकम् ॥ **इदमिति** ॥ अस्या एतन्नृत्तमित्यर्थः । प्रथमं नेपथ्यप्रदर्शनं न खल्विति संबन्धः । नेपथ्यसवनमिति च पाठः । सवनं नाम नाट्यमण्डपे प्रथमं क्रियमाणः कर्मविशेषः । दक्षिणीयं दाक्षिणार्हम् **कथं न तर्पयिष्याम इति** ॥ । अर्चनीयमर्चयिष्याम इति च पाठः । सोपहासं निर्वेदमभिनयन्नाह—**मयेति** ॥ इदमिति शेषः । नामेति कुत्सने । शुष्कं निष्फलं गर्जितं यत्र तस्मिन्नन्तरिक्षे आकाशे । अन्तरिक्षे शुष्कगर्जिते सति चातकेन

---

१. **विदूषकः**—अइ पण्डितंमण्णे किं अण्णं । मोदअखण्डणे वि असमत्था तुमं किं जाणासि । पसण्णचन्दपादसरिसेहिं केसपासेहिं एदाणं भीसिअसि । (अयि पण्डितंमन्ये किमन्यत् । मोदकखण्डनेऽप्यसमर्था त्वं किं जानासि । प्रसन्नचन्द्रपादसदृशैः केशपाशैरेतान् भीषयसे ।) (सर्वे प्रहसिताः—) २. नखलु नेपथ्यसंगीतकमिदम् ३. नेपथ्यसवनमिदम् ४. त्वामर्चनीयं नार्चयिष्यामः

**विदूषकः**—मए णाम मुद्धचादएण विअ सुक्खघणगज्जिदे अन्तरिक्खे जलपाणं इच्छिदं ।१

**मया नाम मुग्धचातकेनेव शुष्कघनगर्जितेऽन्तरिक्षे जलपानमिष्टम् ।२**

**परिव्राजिका**—एवमेव ।

**विदूषकः**— भअवदि, पण्डिदपरितोसपच्चआ णं मूढा जादी । जइ भअवदीए सोहणं भणिदं तदो इमं से पारितोसिअं पअच्छम्मि । (इति राज्ञो हस्तात्कटकमाकर्षति ।)

**भगवति, पण्डितपरितोषप्रत्यया ननु मूढा जातिः । यदि भगवत्या शोभनं भणितं तत इदमस्यै पारितोषिकं प्रयच्छामि ।**

**देवी**—चिट्ठ दाव । गुणन्दरं अआणन्तो किंति तुमं आहरणं देसि ।

**तिष्ठ तावत् । गुणान्तरमजानन्किमिति त्वमाभरणं ददासि ।**

**विदूषकः**—परकेरअं ति कदुअ । **परकीयमिति कृत्वा ।**

**देवी**—(आचार्यं विलोक्य) अज्ज गणदास, णं दंसिदोवदेसा दे सिस्सा ।

**आर्य गणदास, ननु दर्शितोपदेशा ते शिष्या ।**

**गणदासः**—वत्से, प्रतिष्ठस्वेदानीम् ।

(मालविका सहाचार्येण निष्क्रान्ता ।)

---

जलपानमिव मयेदं मुधा इष्टमिति संबन्धः । **एवमेवेति** ॥ सोपहासोऽनुवादः । अथ राज्ञः प्रीतिं मालविकायै बोधयितुं कंचिदुपायं निरूप्याह— **भगवतीत्यादि** ॥ मूढा जातिः मूढजनः पण्डितपरितोषेण प्रत्ययः परस्मिन् साधुत्वनिश्चयः विश्वासो वा यस्याः सा इति सामान्योक्तिः । अहमेवंविध इति भावः । ततः किमित्यत्राह— **यदीति** ॥ यदीति सिद्धानुवादे । **तत इति** ॥ भगवत्या अभिनन्दनादित्यर्थः । देवी तदारम्भमवलोक्य सेर्ष्यं निरुणद्धि— **तिष्ठेत्यादि** ॥ **तिष्ठ** निर्व्यापारो भव । इदं मा कार्षीरित्यर्थः । **गुणान्तरं** गुणविशेषं तारतम्यमिति यावत् । अजानन्निति हेतुगर्भम् ॥ **किमिति** ॥ किंनिमित्तम् । सोपहासं निमित्तमाह—**परकीयमिति** ॥ इदमिति शेषः । अथेर्ष्यया मालविकां ततो नेतुं गणदासमाह— **आर्येति** ॥ **दर्शितोपदेशा नन्विति** ॥ अत इयमितो नेयेति भावः । अनुशास्ति—**वत्स इति** ॥ अत्रार्येत्यादिना राज्ञो हित-

---

१. अहव पण्डिदसंतोसपच्चआ णं मूढजादी । जदो अत्तहोदीए सोहणं भणिदं—

२. अथवा पण्डितसंतोषप्रत्यया ननु मूढजातिः । यतोऽत्रभवत्या शोभनं भणितं—

**विदूषकः**—(राजानं विलोक्य जनान्तिकम्) एत्तिओ एव्व मे मदिविहवो भवन्दं सेविदुं । एतावानेव मे मतिविभवो भवन्तं सेवितुम् ।

**राजा**—(जनान्तिकम्) अलमलं परिच्छेदेन । अहं हि

भाग्यास्तमयमिवाक्ष्णोर्हृदयस्य महोत्सवावसानमिव ।
द्वारपिधानमिव धृतेर्मन्ये तस्यास्तिरस्करणम् ॥ ११ ॥

**विदूषकः**—(जनान्तिकम्) साहु तुमं दरिद्दो आदुरो विअ वेज्जेण उवणिज्जमाणं ओसदं इच्छसि ।

साधु त्वं दरिद्र आतुर इव वैद्येनोपनीयमानमौषधमिच्छसि ।

(प्रविश्य)

**हरदत्तः**—देव, [1]मदीयमिदानीमुपदेशमवलोकयितुं क्रियतां प्रसादः ।

**राजा**—(आत्मगतम्) अवसितो दर्शनार्थः । (दाक्षिण्यमवलम्ब्य, प्रका-

---

निरोधात् निरोधनं नामाङ्गम् । मया साधयितुं शक्यं साधितमितः परं साध्यं त्वयैव निरूपणीयमिति जनान्तिकमाह—**एतावानेवेति** ॥ एतावान्मालविकासाक्षाद्दर्शनपर्यन्तः मतिविभवः बुद्धिसामर्थ्यम् । राजा सखेदमाह—**अलमित्यादि** ॥ **परिच्छेदेन** एतावानेवेति इयत्ताकरणेन अलमिति निषेधे । अत्र हेतुं दर्शयितुं स्वावस्थामाह—**अहमित्यादि** ॥ **भाग्येति** ॥ **तस्याः** मन्नयनचकोरचन्द्रिकाया मनोनिर्वृतिहेतोः मालविकायाः **तिरस्करणं** तिरोधानम् । **अक्ष्णोः** मन्नयनयोः यद्भाग्यं तस्यास्तमयमिव तथा **हृदयस्य** यो महोत्सवः तदवसानमिव च मन्य इत्युत्प्रेक्षाभ्यां चक्षुःप्रीतिः मनोनिर्वृतिश्चातः परं न भाविनीति द्योत्यते, चक्षुर्मनसोः वैक्लव्यं च । ननु धैर्यमवलम्ब्य सर्वं समाधीयतामित्यत्राह—**द्वारेति** ॥ तस्यास्तिरस्करणं धृतेः धैर्यस्य यद्द्वारं मन्मनसि प्रवेशमार्गः तस्य पिधानमाच्छादकं निरोधकमिति यावत् । तदिव च मन्य इत्युत्प्रेक्षया धैर्यावलम्बनस्याशक्यत्वं द्योत्यते । अनेन भविष्यन्त्यो मोहाद्यवस्था अपि द्योत्यन्ते । यतोऽहमेवंविधस्ततो भवतैव अतः परमपि तद्दर्शनादिकं साध्यं साधनीयमिति भावः । अतः परिच्छेदेनालमिति पूर्वेण संबन्धः । अत्रारतेः गम्यमानत्वाद्विधूतं नामाङ्गम् । आर्या वृत्तम् । तदाकर्ण्य तदाश्वासनाय स्वसामर्थ्यं दर्शयन् सोपहासमाह—**साध्वित्यादि** ॥ साधु भवदुक्तं साध्विति सोपहासोक्तिः । दरिद्रः आतुरः । वैद्येनोपनीयमानमौषधमिव त्वामिच्छसीति संबन्धः । मया उपनीयमानं साध्यमिति शेषः । वैद्योपमया स्वस्य सामर्थ्यं कामविकारचिकित्सार्हत्वं च सूच्यते । वैद्येन हि विना प्रतिफलं दरिद्रायौषधं दातव्यमिति धर्मशास्त्रम् । **देवेति** ॥ स्पष्टम् । **अवसित इति** ॥ दर्शनस्य प्रयोगदर्शनस्यार्थः प्रयोजनम् । **पर्युत्सुका**ः प्रयोगदर्शनो-

---

१. मदीयमिदानीं प्रयोगमवलोकयितुं.

शम् ।) ननु पर्युत्सुका एव वयम् ।

**हरदत्तः**—अनुगृहीतोऽस्मि ।

(नेपथ्ये)

**वैतालिकः**—जयतु जयतु देवः । उपारूढो [1]मध्यमह्नः सविता । तथा हि ।

पत्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनां
सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि ।
बिन्दुक्षेपान्पिपासुः [2]परिसरति शिखी भ्रान्तिमद्वारियन्त्रं
सर्वैरुस्रैः समग्रस्त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः ॥ १२ ॥

**विदूषकः**—अविह अविह । अह्माणं भोअणवेला उवट्ठिदा, अत्तहोदो वि । [3]उइदवेलादिक्कमादो चिकिस्सआ दोसं उदाहरन्दि । हरदत्त, किं दाणिं भणासि ।

अविध अविध । अस्माकं भोजनवेलोपस्थिता अत्रभवतोऽपि । [4]उचितवेलातिक्रमाच्चिकित्सका दोषमुदाहरन्ति । हरदत्त, किमिदानीं भणसि ।

**हरदत्तः**—नास्ति वचनस्यान्यस्यावकाशोऽत्र ।

---

त्सुकाः । एवं मालविकायाः साक्षाद्दर्शनादिवर्णनेन नायकरतेः परिपोषं मालविकाया अप्यनुरागाविर्भावं च प्रदर्श्याङ्कपरिसमापनायावसरे वैतालिकवचनं हरदत्तनाट्यविघातोपयोगितया प्रस्तौति—**नेपथ्य इत्यादि** ॥ सविता अहो मध्यमुपारूढ इत्यन्वयः । **पत्रेति** ॥ अत्यर्थतापादिति वाक्यत्रयेऽपि संबध्नाति । **हंसाः** दीर्घिकासु याः पद्मिन्यः पद्मसंहतिः तासाम् **पत्रच्छायासु** पत्रस्य छाया पत्रच्छायेति समासोत्तरमेकशेषः । अतः 'छाया बाहुल्ये' इति नपुंसकत्वं न । मुकुलितनयना भवन्तीति स्वभावोक्तिः । **सौधानि** राजसदनानि । वलभीनां गोपानसीनां यः परिचयः निवासरूपः तं द्विषन्तीति तद्द्वेषिणः तन्निवासासहा इति यावत् पारावता येषु तानि । **शिखी** मयूरः । बिन्दूनामुत्क्षेपानुद्गमान् उद्गतान् जलबिन्दूनिति यावत् । **पिपासुः** सन् **भ्रान्तिमत्** भ्रमणयुक्तं **वारियन्त्रं** जलयन्त्रं **परिसरति** परितश्चरति । अत्यर्थतापे हेतुमाह—**सर्वैरिति** ॥ हे नृप । नृपगुणैरित्येकं पदं वा । सर्वैः गुणैः तेजस्वित्वादिभिः समग्रः संपूर्णः त्वमिव सर्वैः उस्रैः किरणैः समग्रः सप्त सप्तयोऽश्वाः यस्य सः सूर्यः दीप्यते प्रकाशते । अत्र काव्य-

---

१. मध्याह्नः २. परिपतति ३. उइदवेलादिकमे ४. उचितवेलातिक्रमे.

राजा—तेन हि त्वदीयमुपदेशं श्वो वयं द्रक्ष्यामः। विश्राम्यतु भवान्।
हरदत्तः—यदाज्ञापयति देवः। (इति निष्क्रान्तः।)
देवी—णिव्वट्टेदु अज्जउत्तो मज्जणविहिम्[1]।
निर्वर्तयत्वार्यपुत्रो मज्जनविधिम्।
विदूषकः—भोदि, विसेसेण भोअणंमि[2] तुवरावेहि।
भवति, विशेषेण भोजने[3] त्वरय।
परिव्राजिका—(उत्थाय) स्वस्ति भवते।
(इति सपरिजनया देव्या सह निष्क्रान्ता।)
विदूषकः—भो ण केवलं रूवे, सिप्पे वि अदुदीआ मालविआ।
भोः न केवलं रूपे, शिल्पेऽप्यद्वितीया मालविका।
राजा—वयस्य,

अव्याजसुन्दरीं तां विज्ञानेन ललितेन योजयता।
उपकल्पितो[4] विधात्रा बाणः कामस्य विषदिग्धः॥ १२॥

किं बहुना। चिन्तयितव्योऽस्मि ते।

---

लिङ्गमुपमा च। वैतालिकगतो राजविषयको भावश्च व्यङ्ग्यः। प्रकृतो राज्ञो विरहतापोऽप्यनेन सूच्यते कविना। स्रग्धरा वृत्तम्। तदाकर्ण्य नर्मसचिवः सोल्लासमाह—**अस्माकमिति**॥ भोजनवेला उपस्थितेति॥ भोजनमिति स्नानादेरुपलक्षणम्। हरदत्तनिर्बन्धमपनेतुमाह—**अत्रभवतोऽपीति**॥ **उचितवेलेति**॥ भोजनादेरुचितवेलेत्यर्थः॥ **अतिक्रमादिति**॥ आतिक्रम इति च पाठः। अत्रभवतोऽपीत्यादिना नाट्यस्यायं नावसर इति प्रकाश्य हरदत्तं पृच्छति—**हरेति**॥ बुभुक्षया पीडितो विदूषको मज्जनविधिमित्यादिदेवीवचनं श्रुत्वाह—**भवतीति**॥ **भोजने त्वरयेति**॥ एतमिति शेषः। मज्जनादिकं बहिरङ्गमिति भावः। मज्जनविधिमित्यत्र मध्याह्नविधिमिति च पाठः। राज्ञो रतिमुत्तेजयितुं प्रशंसति—**भो इत्यादि**॥ तदुक्तमनुवदन्नाह—**अव्याजेति**॥ अव्याजेन भूषणभारादिव्याजं विना सुन्दरीं **तां** मालविकां **ललितेन** मनोज्ञेन **विज्ञानेन** कलाविद्यया **योजयता विधात्रा** सृष्टिकर्त्रा कामस्य विषेण दिग्धः उपलिप्तः बाण **उपकल्पितः** संनिधापितः। अत्र सुन्दर्यां तस्यां विज्ञानयोजनस्य विषदिग्धकामबाणसंनिधापनस्य चार्थयोरैक्यारोपान्निदर्शना। तया च यथा विषदिग्धः कामबाणो विषानलमुद्दीप्य समधिकं पीडयति तथा ललितविज्ञानयुक्ता सुन्दरी सा मन्मनसि मदनानलं समुद्दीप्य व्यथयतीत्युपमा व्यज्यते। अनया राज्ञो मनसि भविष्यन्नुन्माद-

---

१. मध्याह्नविधिं २. पाणभोअणं ३. पानभोजने ४. परिकल्पितो.

**विदूषकः**—भवदा वि अहं। दिढं विपणिकन्दु विअ मे उअरब्भन्दरं दज्झइ।

भवताप्यहम्। दृढं विपणिकन्दुरिव म उदराभ्यन्तरं दह्यते।

**राजा**—एवमेव भवान्सुहृदर्थे त्वरताम्।

**विदूषकः**—[१]गहीदं वअणं। किंदु मेहावलीणिरुद्धा जोण्हा विअ पराहीणदंसणा तत्तहोदी मालविआ। भवं वि [२]सूणोवरिअरो गद्धो विअ आमिसलोलुओ भीरुओ अ। ता [३]अणादरो विअ कज्जसिद्धिं पत्थअन्दो मे रोअसि।

[४]गृहीतं वचनम्। [५]किंतु मेघावलीनिरुद्धा ज्योत्स्नेव पराधीनदर्शना तत्रभवती मालविका। भवानपि [५]सूनोपरिचरो गृध्र इव आमिषलोलुपो भीरुकश्च। तस्मा[६]दनादर इव कार्यसिद्धिं प्रार्थयमानो मे रोचसे।

**राजा**—सखे [७]कथं भविष्यामि।

मूर्च्छयोः प्रवेशः सूच्यते। आर्या वृत्तम्। अथात्मनो वैवश्यातिशयं प्रकाशयन् साहाय्यमपेक्षमाण आह—**किमित्यादि**॥ चिन्तयितव्योऽस्मीत्यनेन कामपीडातिशयः प्रकाशितः॥ **भवताप्यहमिति**॥ चिन्तयितव्य इत्यनुषज्यते। अत्र हेतुमाह—**विपणीति**॥ विपणिः पण्यवीथिका तस्यां कन्दुः। 'कन्दुर्ना स्वेदिनी' इत्यमरः। कन्दुर्नाम सुरानिष्पादनपात्रविशेष इति महेश्वरः। भ्राष्ट्रमिति केचित्। भक्ष्यविशेषपचनपात्रमित्यन्ये। तदुक्तमनुवदन्नाह—**एवमेवेति**॥ एवमेव यथा भोजने स्वार्थे भवान् त्वरते तथेत्यर्थः। **सुहृदर्थे** सुहृदो मम मालविकापुनर्दर्शनादिरूपे प्रयोजने॥ **त्वरतामिति**॥ अत्र दृष्टनष्टस्य बीजस्यानुसरणात् परिसर्पः॥ **गृहीतमिति**॥ वचनं गृहीतं भवदुक्तमङ्गीकृतमित्यर्थः। गृहीतक्षणोऽस्मीति पाठे गृहीतः अङ्गीकृतः क्षणः भवदर्थे व्यापारो येन स इत्यर्थः। 'कालविशेषेऽवसरे व्यापारे पारतन्त्र्ये च। मध्ये तथोत्सवे च क्षणशब्द' इति कोशः। विशेषमाह—**किंत्विति**॥ मेघावल्या निरुद्धा तिरोहिता। एतत्प्रतिबिम्बभूतो देवीनिरोधोऽत्र गम्यः॥ **भवानपीति**॥ सूना वधस्थानं तस्या उपरिचरः। गृध्रः इत्यत्र विहङ्ग इति च पाठः। आमिषं मांसं भोग्यवस्तु च, तत्र लोलुपः अतिशयेन लुब्धः। 'सूना पुत्र्यां वधस्थाने आमिषं पुंनपुंसकम्। भोग्यवस्तुनि संभोगेऽप्युत्कोचे

१. गहीदक्खणोहि २. सूणापरिसरचरो विअ विहङ्गो ३. अणादुरो भविअ ४. गृहीतक्षणोऽस्मि ५. सूनापरिसरचर इव विहङ्गः ६. अनातुरो भूत्वा ७. कथमनातुरो भविष्यामि। यदा.

सर्वान्तःपुरवनिताव्यापारप्रतिनिवृत्तहृदयस्य ।
सा वामलोचना मे स्नेहस्यैकायनीभूता ॥ १४ ॥

( इति निष्क्रान्ताः सर्वे । )

## इति द्वितीयोऽङ्कः ।

---

पल्लेऽपि च ॥' इति मेदिनी । अस्य विदूषकवचनत्वादत्र हीनोपमानत्वरूपोपमादोषो न, किन्तु हास्यानुगुण्यात् गुण एवायमिति बोध्यम् । ततः किमित्यत्राह—**तस्मादिति** ॥ तस्मात् उक्तात्कारणद्वयात् । त्वमिति शेषः । **अनादर इव** मालविकादर्शनादौ आदरशून्य इव । भूत्वेति च पाठः । अनादर इत्यत्रानातुर इति च पाठः । अनुत्कण्ठित इति तदर्थः ॥ **मे रोचस इति** ॥ रुच्यर्थानामिति संप्रदानता । भवान्मालविकादर्शनादिकार्ये त्वरामप्रदर्श्य तिष्ठतु । इदं मे रुचितमित्यर्थः । कार्यसिद्ध्यै अहं यतिष्ये इति चानेन प्रकाशितम् । गृहीतेत्यादिवचनेन सान्त्वस्य गम्यमानत्वात् पर्युपासनं नामाङ्गम् । तदुक्तस्यानुष्ठातुमशक्यतां दर्शयन्नाह—**सख इत्यादि** ॥ कथं भविष्यामि तथाभवनमशक्यमित्यर्थः । अत्र हेतुमाह—**सर्वेति** ॥ सर्वान्तःपुरवनितासु यो व्यापारः तत्सौन्दर्यादिगुणानामाश्लेषादिक्रियाणां चानुसंधानादिरूपो मनोव्यापारः तस्मात् प्रतिनिवृत्तं नतु निवर्तमानं हृदयं यस्य विगलितमहिषीजनान्तरासङ्गस्येत्यर्थः । **मे स्नेहस्य** प्रेमविशेषस्य **वामलोचना** सुन्दरनयना सेत्यनुभूतार्थकम् । **एकायनीभूता** एकाश्रयीभूता । एकपदेनाश्रयान्तरव्यावृत्तिर्दर्शिता । तदेकविषयको मदीयस्नेह इत्यर्थः । अत्र परिसंख्यालङ्कारः । आर्या वृत्तम् ॥ मालविकानिष्क्रमणेन कथाविच्छेदे सत्यनेन श्लोकेन गम्यमानो नायकस्याभिलाषातिशय उत्तराङ्कार्थबीजम् । चित्तासङ्गरूपा कामावस्था चानेन दर्शिता । इति सर्वं शिवम् ॥

॥ इति सारार्थदीपिकायां मालविकाग्निमित्रव्याख्यायां द्वितीयोऽङ्कः ॥

# तृतीयोऽङ्कः ।

(ततः प्रविशति परिव्राजिकायाः परिचारिका समाहितिका ।)[1]

**समाहितिका**[2]—आणत्तह्मि भअवदीए देवेस्स[3] उवाअणत्थं बीजपूरअं गेण्हिअ आअच्छात्ति । ता जाव पमदवणपालिअं महुअरिअं अण्णेसामि । (परिक्रम्यावलोक्य च) एसा तवणीआसोअं ओलोअन्दी चिट्ठदि । जाव णं उवसप्पामि[4] ।

आज्ञप्तास्मि भगवत्या, देवस्योपायनार्थं बीजपूरकं गृहीत्वागच्छेति । तद्यावत्प्रमदवनपालिकां मधुकरिकामन्विष्यामि । एषा तपनीयाशोकमवलोकयन्ती तिष्ठति । यावदेनामुपसर्पामि[5] ।

(ततः प्रविशत्युद्यानपालिका ।)

**समाहितिका**[6]—(उपसृत्य) महुअरिए, अवि सुहो दे उज्जाणव्वावारो ।

मधुकरिके, अपि सुखस्त उद्यानव्यापारः ।

**मधुकरिका**—अह्मो समाहिदिआ[7] । सहि, सागदं दे ।

अहो समाहितिका[6] । सखि, स्वागतं ते ।

**समाहितिका**[6]—हला, भअवदी आणवेदि । अरित्तपाणिणा अह्मारिसजणेण अत्थपदी[8] दक्खिदव्वो । ता बीजपूरएण सुस्सूसिदुं[9] इच्छम्मित्ति ।

हला, भगवत्याज्ञापयति—अरिक्तपाणिनास्माहशजनेन अर्थपति[10]-

---

॥ अथ तृतीयोऽङ्कः ॥

अथ कथासङ्घटनायादौ प्रवेशकं प्रस्तौति— **तत इत्यादि** ॥ **परिव्राजिकाया इति** ॥ कौशिक्या इत्यर्थः । समाहितिकेति परिचारिकाया नाम । परभृतिकेति क्वचित् पाठः । सा स्वव्यापारमनुसंदधाना आह— **आज्ञप्तेत्यादि** ॥ आज्ञामनुवदति—**देवस्येति** ॥ **बीजपूरकं** मातुलुङ्गफलम् । उपसर्पामीत्यत्र संभावयामीति च पाठः । उद्यानपालिकानुरूपं पृच्छति—**अपीति** ॥ उद्याने व्यापारः संमार्जनादिरूपः सुखः सुखकरः । अरिक्तेत्यादिना भगवत्याज्ञानुवादः । अरिक्तः अशून्यः

---

१. परिचारिका २. समाहिदिए, देवीए ३. संभावेमि ४. समाहितिके, देव्या ५. यावदेनां संभावयामि ६. परभृतिका ७. परहुदिआ ८. तत्तहोदी देवी दक्खिदव्वा ९. पेक्खिदुं १०. तत्रभवती देवी द्रष्टव्या.

पतिर्द्रष्टव्यः। तद्बीजपूरकेण शुश्रूषितुमिच्छामीति।

**मधुकारिका**—णं संणिहिदं एव्व बीजपूरअं। कहेहि दाव अण्णोण्णसंघरिसिदाणं णट्टाअरिआणं उवदेसं दक्खिअ कदरो भअवदीए पसंसिदो।

नतु संनिहितमेव बीजपूरकम्। कथय तावदन्योन्यसंघर्षितयोर्नाट्याचार्ययोरुपदेशं दृष्ट्वा कतरो भगवत्या प्रशंसितः।

**समाहितिका**—दुवे वि किल आअमिणा पओअणिउणा अ। किंदु सिस्साग़ुणविसेसेण उण्णमिदो गणदासो।

द्वावपि किलागमिनौ प्रयोगनिपुणौ च। किंतु शिष्यागुणविशेषेण उन्नमितो गणदासः।

**मधुकारिका**—अह मालविआगदं कोलीणं कहं सुणीअदि।

अथ मालविकागतं कौलीनं कथं श्रूयते।

**समाहितिका**—बलिअं खु साहिलासो भट्टा तस्सिं। केवलं देवीए धारिणीए चित्तं रक्खन्दो अत्तणो पहुत्तणं ण दंसेदि। मालविआ वि इमेसु दिअहेसु अणुहूदमुत्ता विअ मालदीमाला मिलाअमाणा लक्खिअदि। अदो वरं ण जाणे। विसज्जेहि मं।

बलवत्खलु साभिलाषो भर्ता तस्याम्। केवलं देव्यां धारिण्याश्चित्तं रक्षन्नात्मनः प्रभुत्वं न दर्शयति। मालविकाप्येषु दिवसेष्वनुभूतमुक्तेव मालतीमाला म्लायमाना लक्ष्यते। अतः परं न जाने। विसर्जय माम्।

पाणिर्यस्य तेन। **अर्थपतिः** राजा द्रष्टव्य इति। यथोक्तं—'रिक्तपाणिर्न पश्येत्तु राजानं दैवतं गुरुम्' इति। **शुश्रूषितुं** सेवितुम्। प्रेक्षितुमिति च पाठे पूरकेणेति विशेषणे तृतीया। नन्वित्यादिना बीजपूरकग्रहणे संमतिर्दर्शिता। अथ वृत्तान्तान्तरं जिज्ञासुः पृच्छति—**कथयेत्यादि**॥ **द्वावपीति**॥ **आगमिनौ** भरतशास्त्रज्ञौ। **उन्नमितः** उत्कर्षितः। मुख्यतया जिज्ञासितं पृच्छति—**अथेति**॥ **मालविकागतं** मालविकासंबन्धि। 'स्यात्कौलीनं लोकवाद' इत्यमरः। **कथं श्रूयते** श्रूयमाणं सत्यं न वेत्यर्थः। **बलवदित्यादि**॥ बलवदत्यर्थम्। तर्हि कुतस्तां न परिगृह्णातीत्यत्राह—**केवलमिति**॥ **रक्षन्निति**॥ रक्षितुमित्यर्थः। तदावर्जनार्थमिति यावत्। **आत्मनः प्रभुत्वं न दर्शयतीति**॥ तदभिलाषं न प्रकाश-

१. प्रेक्षितुं २. परभृतिका ३. मालविआए उवदेसो पसंसिदो ४. मालविकाया उपदेशः प्रशंसितः ५. किं ति ६. किमिति.

**मधुकरिका**—एदं साहावलम्बि बीजपूरअं गेण्ह ।

एतच्छाखावलम्बि बीजपूरकं गृहाण ।

**समाहितिका**[1]—(गृहीत्वा) हला तुमं वि इदो वरं पेसलदरं साहुजणसुस्सूसाए फलं अणुहोहि[2] । (इति प्रस्थिता ।)

हला त्वमपीतः परं पेशलतरं साधुजनशुश्रूषायाः फलमनुभव[3] ।

**मधुकरिका**—सहि, समं एव्व गच्छह्म । अहं वि इमस्स चिराअमाणकुसुमोग्गमस्स तवणीआसोअस्स दोहदणिमित्तं देवीए विण्णवेमि ।

सखि सममेव गच्छावः । अहमप्यस्य चिरायमाणकुसुमोद्गमस्य तपनीयाशोकस्य दोहदनिमित्तं देव्यै विज्ञापयामि ।

**समाहितिका**[1]—जुज्जइ । अहिआरो क्खु तुह ।

युज्यते । अधिकारः खलु तव ।

(इति निष्क्रान्ते ।)

इति प्रवेशकः ।

(ततः प्रविशति कामयमानावस्थो राजा विदूषकश्च ।)

**राजा**—(आत्मानं विलोक्य)

शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे
भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति ।

---

यतीति, तां न परिगृह्णातीति वा भावः । अत एवाप्रस्तुतप्रशंसा । अथ मालविकाया अप्यवस्थामाह— **मालविकापीति** ॥ पूर्वमनुभूता पश्चान्मुक्ता अनुभूतमुक्ता **ग्लायमाना** क्षीणहर्षा क्षीणकान्तिश्च । अनेन मालविकायाः वैवर्ण्यादयः कामावस्थाः सूचिताः ॥ **हलेति** ॥ इतः परमपीति संबन्धः । **पेशलतरं** चारुतरम् ॥ **फलमिति** ॥ ऐहिकं पारत्रिकं चेत्यर्थः । अनुभवेत्याशिषि लोट् । **चिरायमाणेति** ॥ **दोहदनिमित्तं** दोहदार्थम् । 'तरुगुल्मलतादीनामकाले कुशलैः कृतम् । पुष्पाद्युत्पादकं द्रव्यं दोहदम्' इति शब्दार्णवे । तच्चात्र सुन्दरीपादाघातरूपमिति स्फुटीभविष्यति । तदुक्तमनुमोदते—**युज्यत इति** ॥ अत्र प्रवेशके नायकयोरभिलाषोत्पत्त्यादिरूपः कथांशो वृत्तः । दोहदार्थं मालविकासमागमादिः वर्णिष्यमाण इति विवेकः । सूचितनायकप्रवेशमाह—**तत इत्यादि** ॥ कामयमानावस्थ इत्यस्यार्थोऽस्मदीयशाकुन्तलव्याख्यायां द्रष्टव्यः । तदवस्थासु चक्षुःप्रीतिः मनस्सङ्गश्च दर्शितौ । अभिलाषाद्यवस्थापक्षे त्वभिलाषो वर्णितः । इतरावस्था वर्णयिष्यन्ते ॥ **आत्मानं विलोक्येति** ॥ कार्श्याद्यात्मावस्थां निर्वर्ण्येत्यर्थः । स्वयमाहेति शेषः । **शरीरमिति** ॥ दयितालिङ्गनेन यत्सुखं तस्मिन्नसति शरीरं क्षामं कृशं स्यादिति संभावनायां

---

१. परभृतिका  २. पावहि; पाविदा होहि  ३. फलं प्राप्नुहि; फलं प्रापिता भव.

तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं
प्रसक्ते निर्वाणे हृदय परितापं व्रजसि किम् ॥ १ ॥

विदूषकः—अलं भवदो धीरदं उज्झिअ परिदेविदेण । दिट्ठा मए तत्तहोदीए मालविआए पिअसही बउलावलिआ । सुणाविदा अ मए जं भवदा संदिट्ठं ।

अलं भवतो धीरतामुज्झित्वा परिदेवितेन । दृष्टा मया तत्रभवत्या मालविकायाः प्रियसखी बकुलावलिका । श्राविता च मया यद्भवता संदिष्टम् ।

राजा—ततः किमुक्तवती ।

विदूषकः—विण्णवेहि भट्टारं । अणुगहीदह्मि इमिणा णिओएण । किंदु सा तवस्सिणी देवीए अहिअदरं रक्खिअमाणा णाअरक्खिदो विअ मणी ण सुहं समासादइदव्वा । तहवि घटइस्सं ति ।

विज्ञापय भर्तारम्- अनुगृहीतास्म्यनेन नियोगेन । किंतु सा तपस्विनी देव्याधिकतरं रक्ष्यमाणा नागरक्षित इव मणिर्न सुखं समासादयितव्या । तथापि घटयिष्यामीति ।

---

लिङ् । दयितालिङ्गनसुखासत्त्वेनापि शरीरकार्श्यस्य जननात् तद्भवनं संभाव्यमित्यर्थः । तथा सा दयिता क्षणमपि न दृश्यत इति हेतोः चक्षुः सास्रं भवेत् । क्षणिकेनापि दयितादर्शनाभावेन चक्षुषो दुःखजनितं सास्रत्वं च संभाव्यमित्यर्थः । अत्र वाक्यद्वये ममेत्यध्याहारः । जनस्येत्यध्याहारे तु सामान्यनिबन्धनाप्रस्तुतप्रशंसेति बोध्यम् ॥ इत्थं स्वीयस्य कार्श्यस्यास्रस्य चोपपत्तिमुक्त्वा अनुभूयमानस्य हृदयसंतापस्यानुपपत्तिमाह—**तयेत्यादि** ॥ हे हृदय त्वं तया पूर्वानुभूतया सारङ्गस्य हरिणस्य अक्षिणी इवाक्षिणी यस्याः सा तया । आभ्यां पूर्वानुभूतसौन्दर्यादीनां नृत्यसमये चक्षुषोरभिव्यक्तानां भावविशेषाणां चानुस्मृतिर्द्योत्यते । कदाचिद्विरहितं नासि । अत इत्यर्थात् । निर्वाणे परमानन्दे प्रसक्ते प्रस्तुते सति । निर्वाणेन भवितव्ये सतीत्यर्थः । परितापं व्यथातिशयं किं व्रजसि तद्विरहरूपकारणाभावात् सन्तापप्राप्तिर्न युक्तेत्यर्थः । अत्र विभावना । चिन्तास्मृत्यादयो व्यभिचारिणश्च व्यज्यन्ते । तदुपस्कृता कार्श्याद्यनुभाविता मालविकाविषयिका रतिर्विरहकालावच्छिन्ना प्राधान्येन प्रतीयत इति विप्रलम्भशृङ्गारो ध्वन्यते । अयमेव रसोऽस्मिन्नङ्के प्राधान्येन

---

१. वहसि २. सुणाविदो अअं अत्थो जो भवदा संदिट्ठो ३. श्रावितोऽयमर्थो यो भवता संदिष्टः ४. अच्चादरेण; अहिअं रक्खन्दीए ५. णिही ६. यतिस्सं ७. अत्यादरेण; अधिकं रक्षन्त्या ८. निधिः ९. यतिष्ये.

राजा—भगवन् संकल्पयोने, प्रतिबन्धवत्सु चापि विषयेष्वभिनिवेश्य तथा प्रहरसि यथा जनोऽयं कालान्तरक्षमो न भवति ।
(सविस्मयम् )

**क्व रुजा हृदयप्रमाथिनी क्व च ते विश्वसनीयमायुधम् ।**
**मृदु तीक्ष्णतरं यदुच्यते तदिदं मन्मथ दृश्यते त्वयि ॥ २ ॥**

---

वर्ण्यते । शिखरिणी वृत्तम् । नर्मसचिवस्तमाश्वासयति—**अलमिति** ॥ परिदेवितेन विलापेन अलमिति निषेधे । अत्र हेतुमाह—**दृष्टेति** ॥ **आविता चेति** ॥ तदिति शेषः ॥ **विज्ञापयेति** ॥ तपस्विनी दीना ॥ **अधिकतरमिति** ॥ अत्यादरेणेति च पाठः । नागरक्षितो मणिरिवेत्यन्वयः । निधिरिति च पाठः । **सुखम्** अनायासेन । **घटयिष्यामि** घटयितुं यतिष्ये । यतिष्य इति च क्वचित्पाठः । अत्र प्राप्तिसंभावनया प्राप्त्याशा नाम तृतीयावस्था दर्शिता । अनया बिन्दोः समन्वयात् गर्भसंधिः ॥ अथ नर्मसचिववचनमनाकर्णयन्नुन्मादेन पुरः प्रत्यक्षीकृतं शरप्रहारानुमितपुरोऽवस्थानं वा मदनं सप्रशंसमभिमुखीकृत्याह—**भगवन्नित्यादि** ॥ अत्र विदूषकवचनाश्रवणेन मोहः, काममभिमुखीकृत्य वचनेनोन्मादश्च कविना सूच्यते । भगवन्नित्यनेन माहात्म्यं प्रदर्शयता प्रहारस्यानौचित्यं, संकल्पयोन इत्यनेन कामस्य स्वसंकल्पजत्वेन स्वीयत्वं सूचयता तत्प्रहारस्यात्यन्तमनौचित्यं च सूच्यते । **विषयेषु** वनितादिभोग्यवस्तुषु । **अभिनिवेश्य** अभिनिवेशमुत्पाद्य । तद्द्वारेणेत्यर्थः । **प्रहरसि** जनमिममिति शेषः । तथेत्युक्तं प्रकारं विवृणोति—**यथेति** ॥ **अयं जन इति** स्वस्य भृत्यवन्निर्देशः दैन्यं सूचयति । कालान्तरस्य क्षमः शक्तः कालान्तरजीवीति यावत् । अत्र संबुद्धिभ्यां प्रहारस्यानौचित्यद्योतनेन प्रहाराद्विरम्यतामिति मदनं प्रति प्रार्थना प्रकाश्यते । अथ कुसुममयस्याप्यायुधस्यातिशयितपीडारूपकार्यजनकत्वमुपलक्ष्य विस्मयमवलम्बमानः प्रहारादनिवृत्त्या सोपालम्भं पुनराह—**क्वेति** ॥ मनो मथ्नातीति मन्मथ इत्युपालम्भः संबुद्ध्या प्रकाश्यते । हृदयं प्रकर्षेण मथ्नातीति हृदयप्रमाथिनी । रुजा पीडा । क्व ते **विश्वसनीयं** पीडां न जनयेदिति विश्वासस्य विषयः आयुधं कुसुममयमस्त्रं च क्व । अत्राक्षेपद्योतकाभ्यां क्वशब्दाभ्यां हृदयप्रमाथकत्वविशिष्टरुजायाः मृदुत्वविशिष्टायुधस्य च विरुद्धगुणयोः कार्यकारणभावो न घटत इति द्योत्यते । आक्षेपेण च तथाविधात् कारणात्तथाविधं कार्यमुत्पन्नमिति च ॥ अथात्रोपपत्तिमनुसंदधान आह—**मृद्विति** ॥ लोकैः मृदु कोमलं वस्तु तीक्ष्णतरमतिशयेन तीक्ष्णम् उच्यते यत् । निसर्गतो मृदुत्ववद्वस्तु यदि कदाचित्तीक्ष्णं भवति तदा तस्य तीक्ष्णत्वं कठिनवस्तुनोऽप्यतिशयितं भवतीत्यर्थिका मृदु तीक्ष्णतरमिति लोकोक्तिर्येत्यर्थः । मृदुतीक्ष्णशब्दौ चात्र पार्थिवगुणविशेषयोः मार्दवकाठिन्ययोः चेतनधर्मयोः सौम्यत्वक्रूरत्वयोश्चोपस्थापकौ । एकपदोपात्तयोरर्थयोश्चाभेदाध्यव-

---

१. विषयेष्वभिनिवेशकारी किं तथा—

**विदूषकः**—णं भणामि तस्सिं साहणिज्जे कज्जे किदो मए उवाओवक्खेवो । ता पज्जवत्थावेदु भवं अत्ताणं ।

नन्‍ु भणामि तस्मिन्साधनीये कार्ये कृतो मयोपायोपक्षेपः । तत्पर्यवस्थापयतु भवानात्मानम् ।

**राजा**—अथेमं दिवसशेषमुचितव्यापारविमुखेन चेतसा क्व नु खलु यापयामि ।

**विदूषकः**—णं भवं अज्ज पुढमं वसन्दोदरसूअआइ रत्तासोअकोरआइ उवाअणं पेसिअ णववसन्दावदारव्ववदेसेण इरावदीए णिउणिआमुहेण पत्थिदो । इच्छम्मि अज्जउत्तेण सह दोलाहिरोहणं अणुहोदुं ति । भवदा वि से पडिण्णादं । ता पमदवणं एव्व गच्छह्म ।

ननु भवानद्य प्रथमं वसन्तावतरसूचकानि रक्ताशोककोरकाण्युपायनं प्रेष्य नववसन्तावतारव्यपदेशेनेरावत्या निपुणिकामुखेन प्रार्थितः—इच्छाम्यार्यपुत्रेण सह दोलाधिरोहणमनुभवितुमिति । भवताप्यस्यै प्रतिज्ञातम् । तत्प्रमदवनमेव गच्छावः ।

---

सायः । निसर्गतः सौम्या हि मुनिप्रभृतयो यदि कदाचित् क्षुभ्यन्ति तदा तेषां कोपो निसर्गतः क्रूराज्जनादतिशयितो भवतीति प्रसिद्धम् ॥ **तदिति** ॥ तत् लोकैरुच्यमानम् इदं मृदोरधिकं तीक्ष्णत्वं त्वयि त्वदायुधे दृश्यते मया ज्ञायते । अतः मृदोस्त्वदायुधस्य तीक्ष्णतरत्वसंभवात् तथाविधत्वदायुधेन तादृशरुजोत्पत्तिरुपपन्नेति भावः । अत एवात्र कारणनिबन्धनाप्रस्तुतप्रशंसा । पूर्वार्धे विषमं तृतीयपादे लोकोक्तिश्चालङ्कारः । सुन्दरी वृत्तम् । स्वोक्तमश्रुतमवगत्याह—**नन्विति** ॥ उपायस्य उपक्षेपः बीजन्यासः आरम्भ इति यावत् । इति ननु भणामीति संबन्धः । **पर्यवस्थापयतु** स्थिरीकरोतु । **आत्मानं** मनः । धैर्यमवलम्बस्वेति भावः । उपायोपक्षेपः कृत इत्यनेन कतिपयोपायकल्पनाया गम्यमानत्वाद्भूताहरणं नाम संध्यङ्गमित्याहुः । कथञ्चिद्धैर्यमवलम्ब्याह—**अथेत्यादि** ॥ अये इति च पाठः । उचिताः योग्याः परिचिता वा ये व्यापाराः राजकार्यचिन्तनादिरूपाः तत्र विमुखेनेति हेतुगर्भम् । **मनसेति** हेतौ विशेषणे वा तृतीया । दिवसशेषयापनस्थानमुद्बोधयति—**नन्वित्यादि** ॥ वसन्तस्यावतरः प्रादुर्भावः तत्सूचकानि । रक्ताशोककोरकाणीत्यत्र कुरवकाणीति च पाठः । उपायनं प्रेष्येत्यनन्तरं नववसन्तोत्सवापदेशेनेति क्वचित्पाठः । तत्रापदेश इत्यस्य निमित्तमित्यर्थः । **निपुणिकामुखेन** निपुणिकाद्वारा भवानद्य

---

१. किदो उवक्खेओ २. कृत उपक्षेपः ३. अये इमं ४. रत्तासोअकुरवआइ ५. णववसन्दूसवावदेसेण ६. रक्ताशोककुरवकाणि ७. नववसन्तोत्सवापदेशेन.

**राजा**—न क्षममिदम्।

**विदूषकः**—कहं विअ। कथमिव।

**राजा**—वयस्य, निसर्गनिपुणाः स्त्रियः। कथं मामन्यसंक्रान्तहृदयमुपलालयन्तमपि ते सखी न लक्षयिष्यति। अतः पश्यामि।

उचितः प्रणयो वरं विहन्तुं
बहवः खण्डनहेतवो हि दृष्टाः।
उपचारविधिर्मनस्विनीनां
न तु पूर्वाभ्यधिकोऽपि भावशून्यः॥ ३॥

---

प्रार्थितो नान्वति संबन्धः। प्रार्थनाप्रकारमाह— **इच्छामीति** ॥ **दोलेति** ॥ 'फाल्गुने मासि कुर्वीत दोलारोहणमुत्तमम्' इत्यादिना वसन्ते दोलारोहणं विहितम्॥ **तदिति** ॥ प्रतिज्ञातत्वादित्यर्थः। प्रमदवनमन्तःपुरोद्यानम्। इरावतीप्रार्थितानुष्ठानस्याशक्यतामाह—**नेति** ॥ **इदम्** इरावत्या सह डोलाधिरोहणं **न क्षमम्** अशक्यम्॥ **कथमिवेति** ॥ कुतो वेत्यर्थः। उत्तरमाह— **वयस्येत्यादि** ॥ संबुद्ध्या त्वयापीदं ज्ञातुं शक्यमिति द्योत्यते। **स्त्रियः** स्त्रीजातिः निसर्गेण स्वभावेनैव निपुणाः परेङ्गितज्ञानकुशलाः। ततः किमित्यत्राह—**कथमिति** ॥ अत इत्यर्थात्॥ **ते सखीति** ॥ इरावतीत्यर्थः। ते सखीत्यनेन इरावत्या नैपुण्यं तव ज्ञातमिति सूच्यते। **उपलालयन्तमपि** बहिर्व्यापारैः प्रीतिमाविष्कुर्वन्तमपि माम् अन्यस्मिन् प्रियजनान्तरे संक्रान्तं हृदयं यस्य तथाविधम् कथं न **लक्षयिष्यति** लक्षणैर्ज्ञास्यति। लक्षयिष्यत्येवेत्यर्थः। तर्हि किमत्र कर्तुं व्यवसितमित्यत्राह—**अत इत्यादि** ॥ **पश्यामि** मन्ये। किमित्यत्राह—**उचित इति** ॥ उचितः चिरपरिचितः। 'अभ्यस्तेऽप्युचितम्' इत्यमरः। उचितत्वोक्त्या चिरपरिचयादवज्ञेति न्यायेन प्रणयस्य विहनने हेतुरवज्ञादिकं द्योत्यते। यद्वा उचितः वसन्तावतारेण न्याय्यः अपीति शेषः। प्रणयः इरावत्याः पूर्वोक्ता याचना। 'प्रणयास्त्वमी' इत्याद्यमरः। **विहन्तुं** प्रतिषेद्धुम्। प्रणयनिराकरणमिति यावत्। **वरम्** ईषत्प्रियं भवति। अयं पक्षो वक्ष्यमाणान्मनाक् प्रिय इत्यर्थः॥ ननु कारणं विना प्रणयविहननं कथं क्रियते इत्यत्राह— **बहव इति** ॥ **हि** यतः बहवः **खण्डनहेतवः** प्रणयविहननकारणानि **दृष्टाः** बहवस्तद्धेतवः कल्पयितुं शक्या इत्यर्थः। ननु यत्किंचित्कारणमुपकल्प्य प्रणयविहननाद्वरं तदिष्टाचरणमेवेत्यत्राह— **उपचारेति** ॥ पूर्वस्मात्कृतपूर्वादुपचारविधेरधिकः अतिशयितः अपि **भावशून्यः** नायिकान्तरासक्तचित्तत्वात् प्रेमशून्यः। हेतुगर्भमिदम्। **मनस्विनीनां** प्रशस्तमनस्कानाम्। अनेन पूर्वोक्तं निसर्गनिपुणत्वं द्योत्यते। **उपचारविधिः** भर्तृभिः क्रियमाणा इष्टाचरणक्रिया। तुशब्दो विशेषे। न वरमित्यनुषज्यते। वरं न भवती-

**विदूषकः**—णारिहदि भवं अन्देउरपडिट्ठिदं दक्खिण्णं एक्कपदे पिट्ठदो कादुं ।

**नार्हति भवानन्तःपुरप्रतिष्ठितं दाक्षिण्यमेकपदे पृष्ठतः कर्तुम् ।**

**राजा**—(विचिन्त्य) तेन हि प्रमदवनमार्गमादेशय ।

**विदूषकः**—इदो इदो भवं । इत इतो भवान् ।

(उभौ परिक्रामतः ।)

**विदूषकः**—[१]वसन्दो किल पवणदरचालिपल्लवङ्गुलीहिं तुवरेदि विअ भवन्तं— पमदवणं पविसदुत्ति ।

**[२]वसन्तः किल पवनदरचालिपल्लवाङ्गुलाभिस्त्वरयतीव भवन्तम्—प्रमदवनं प्रविशत्विति ।**

**राजा**— (स्पर्शं रूपयित्वा) अभिजातः खलु वसन्तः । सखे, पश्य ।

**[३]आमत्तानां श्रवणसुभगैः कूजितैः कोकिलानां**
**सानुक्रोशं मनसिजरुजः सह्यतां पृच्छतेव ।**
**अङ्गे चूतप्रसवसुरभिर्दक्षिणो मारुतो मे**
**सान्द्रस्पर्शः करतल इव व्यापृतो माधवेन ॥ ४ ॥**

---

त्यर्थः । अतः प्रणयविहननमेव वरमिति पूर्वेण सबन्धः । केचित्तु पूर्वाभ्यधिकोऽप्युपचारविधिः भावशून्यश्चेन्मनस्विनीनामुपचारविधिर्न किंत्वपचारविधिरिति भाव इति व्याचक्षते । प्रणयः विहन्तुमुचितः योग्य इति यत्तद्वरमिति च केचित् । अत्रोत्तरार्धे सामान्यनिबन्धनाप्रस्तुतप्रशंसा , तदर्थस्याद्यवाक्यार्थोपपादकत्वात् काव्यलिङ्गम् , मनस्विनीनामित्यस्य साभिप्रायकत्वात परिकराङ्कुरश्च । औपच्छन्दसिकं वृत्तम् ॥ **नार्हतीति** ॥ अन्तःपुरेषु अन्तःपुरस्त्रीषु प्रतिष्ठितम् । प्रतिष्ठितपदेन तद्विषयकत्वरूपं संबन्धं लक्षयता दाक्षिण्यस्य स्थिरता द्योत्यते । **एकपदे** सपदि **पृष्ठतः कर्तुम्** अपाकर्तुम् **नार्हति** तदयोग्यमित्यर्थः । तदुक्तमनुसरन्नाह— **तेन हीति** ॥ राजानं त्वरयितुं भङ्गया वदति— **वसन्त इति** ॥ पवनेन वायुना दरचालिभिः ईषच्चलितैः पल्लवैरेवाङ्गुलीभिरिति रूपकम् । भवन्तं त्वरयति किल आह्वयतीवेत्युत्प्रेक्षा । आह्वानप्रकारमाह— **प्रमदेति** ॥ **प्रविशत्विति** ॥ भवानिति शेषः । वसन्तः किलेत्यादिस्थाने नन्वेतत्प्रमदवनमित्यादि क्वचित्पाठः । **स्पर्शं रूपयित्वेति** ॥ प्रमदवनवायुस्पर्शमभिनीयेत्यर्थः । अथ नर्मसचिवोक्तमनुमोद-

---

१. णं एदं पमदवणं पवणदरचलाहिं पल्लवङ्गुलीहिं तुवरेदि विअ भवन्तं पवेसिदुं २. नन्वेतत् प्रमदवनं पवनदरचलाभिः पल्लवाङ्गुलीभिस्त्वरयतीव भवन्तं प्रवेशयितुम् । ३. उन्मत्तानां .

**विदूषकः**—पविस णिव्वुदिलाहाअ । प्रविश निर्वृतिलाभाय ।

(उभौ प्रविशतः ।)

**विदूषकः**—भो वअस्स अवहाणेण दिट्ठिं धेहि । एदं खु [1]भवन्दं विलोहइदुकामाए [2]पमदवणलच्छीए जुवइवेसलज्जापइत्तअं वसन्द-कुसुमणेवत्थं गहीदं ।

भो वयस्य अवधानेन दृष्टिं धेहि । एतत्खलु [3]भवन्तं विलोभयितुकामया [4]प्रमदवनलक्ष्म्या युवतिवेषलज्जापयितृकं वसन्तकुसुमनेपथ्यं गृहीतम् ।

**राजा**—ननु विस्मयादवलोकयामि ।

---

मानो वसन्तं श्लाघते— **अभिजात इत्यादि** ॥ वसन्तः अभिजातः कुलीनः यद्वा ज्ञाता । 'अभिजातस्तु कुलजे बुधे' इत्यमरः । उचितवेदीत्यर्थः । खल्वित्यवधारणे । उक्तमुपपादयति—**आमत्तेति** ॥ आमत्तानाम् उन्मत्तानामिति च पाठः । कोकिलानाम् । वसन्ते हि कोकिला उन्माद्यन्ति सरसं कूजन्ति च । **श्रवणसुभगैरिति** पृच्छकशब्दसाम्यं द्योतयति । कूजितैः करणैः मे मनसिजरुजः कामपीडायाः सह्यतां किमियं सह्येति सानुक्रोशं सदयं पृच्छतेव स्थितेन । इवेत्युत्प्रेक्षा । सा च कोकिलकूजितेषु प्रश्नवचनसाम्यात्तदुत्प्रेक्षायां पर्यवस्यति । माधवेन वसन्तेन कर्त्रा चूतानां ये प्रसवाः पुष्पाणि तैः सुरभिः सुगन्धिः चूतप्रसव इव सुरभिः मनोज्ञश्च सान्द्रस्पर्शः श्लक्ष्णस्पर्शः दक्षिणः दक्षिणदिग्भवः अपसव्यश्च मारुत एव करतलः पाणिरिति रूपकमुत्प्रेक्षाङ्गम् । मे अङ्गे शरीरे व्यापृतः व्यापारितः इवेत्युत्प्रेक्षा । वसन्तस्तथा पृच्छन्निव मदङ्गे तथाविधं पवनमेव पाणिं व्यापारितवानिति संभावयामीत्यर्थः । अतोऽभिजात इति ॥ लोके कंचित्सरुजं दृष्ट्वा किमियं सह्येत्यनुयुञ्जानस्तदङ्गे ह्युचितज्ञः स्निग्धो जनः करं व्यापारयतीति स्निग्धजनवृत्तान्तारोपात्समासोक्तिगर्भेयमुत्प्रेक्षा । मारुतः करतल इव व्यापृत इति केचिद्योजयन्ति । अत्र हर्षो भावः । मन्दाक्रान्ता वृत्तम् । **प्रविश निर्वृतिलाभायेति** ॥ निर्वृतिपदेन भाविनी नायिकादर्शनादिजनिता निर्वृतिश्च कविना सूच्यते । प्रमदवनं प्रविष्टो राज्ञो रतिमुद्दीपयन्नाह— **भो इति** ॥ **अवधानेन दृष्टिं धेहि** सावधानं पश्य । कुत्रेत्यत्राह— **एतदिति** ॥ एतदित्यङ्गुल्या निर्देशः नेपथ्यमित्यनेन संबध्नाति । भवन्तं विलोभयितुकामयेति गम्यहेतूत्प्रेक्षा । भवन्तमिवेति च पाठः । युवतिवेषस्य लज्जापयितृकं लज्जाकरमित्यतिशयोक्तिः । युवतिवेषतोऽप्यधिकरम्यमित्यर्थः । कुसुममेव नेपथ्यं वेष इत्येकदेशविवर्तिरूपकम् । लक्ष्म्याः नायिकात्वं गम्यम् । **नन्विति** ॥ **विस्मयात्** विस्मयमवलम्ब्य । नर्म-

---

१. भवन्दं विअ २. महुलच्छीए ३. भवन्तमिव ४. मधुलक्ष्म्या .

रक्ताशोकरुचा विशेषितगुणो बिम्बाधरालक्तकः
प्रत्याख्यातविशेषकं कुरवकं श्यामावदातारुणम् ।
आक्रान्ता तिलकक्रियापि तिलकैर्लग्नद्विरेफाञ्जनैः
सावज्ञेव मुखप्रसाधनविधौ श्रीर्माधवी योषिताम् ॥ ५ ॥

(उभौ उद्यानशोभां निरूपयतः ।)

(ततः प्रविशति पर्युत्सुका मालविका ।)

मालविका—अविण्णादहिअअं भट्टारं अहिलसन्दी अत्तणो वि दाव लज्जेमि । कुदो विहवो सिणिद्धस्स सहीजणस्स इमं वुत्तन्तं आचक्खिदुं । ण जाणे अप्पडीआरगुरुअं वेअणं केत्तिअं कालं

---

सचिवोक्तमर्थं स्वयं भङ्ग्यन्तरेणाह— **रक्तेत्यादि** ॥ योषितामिति पूर्ववाक्येष्वपि संबध्नाति । बिम्बाधरे बिम्बफलतुल्ये अधरे अलक्तकः लाक्षारसः रक्ताशोकरुचा रक्ताशोकपुष्पप्रभया अविशेषितः न्यूनीकृतः गुणो रक्तिमारूपो यस्य । यद्गुणापेक्षया अतिशयवती रक्ताशोकप्रभेत्यर्थः । तथाविधः भवति । विशेषितगुण इति च पाठः । विशेषितः तिरस्कृत इति तदर्थः । तथा श्यामं नीलमवदातं पीतं सितं वा अरुणं रक्तं च कुरवकं कुरवकपुष्पं प्रत्याख्यातं निराकृतं विशेषकं कपोलादौ क्रियमाणः पत्रभङ्गः येन तत् भवति । तथा लग्नानि संसक्तानि द्विरेफा एव अञ्जनानि येषु तैः तिलकैः तिलकवृक्षपुष्पैः तिलकक्रिया ललाटे तिलककरणम् । अपीति समुच्चये । आक्रान्ता अभिभूता । अत इत्यर्थात् । माधवी श्रीः वसन्तलक्ष्मीः योषितां मुखेषु यानि प्रसाधनानि तेषां विधौ रचनायां, रचितेषु मुखप्रसाधनेषु विषयेष्वित्यर्थः । 'परिकर्म प्रसाधनम्' इत्यमरः । सावज्ञेवेत्युत्प्रेक्षा । अत्र वसन्तारम्भसंभूतस्य अत एव वसन्तलक्ष्मीमुखसंबन्धिनेपथ्यत्वेन कल्पितस्य रक्ताशोकादेर्योषिन्मुखप्रसाधनभूतादलक्तकादितो गुणविशेषेणातिशयप्रतिपादनात् पादत्रये व्यतिरेकोऽलङ्कारः । स च सावज्ञत्वोत्प्रेक्षाया अङ्गम् । उत्प्रेक्षा च वसन्तलक्ष्म्यां नायिकावृत्तान्तारोपरूपसमासोक्तिगर्भा । शार्दूलविक्रीडितं वृत्तम् । इत्थं शृङ्गारोद्दीपनतया प्रकृतानुगुण्येन प्रमदवनं सह वसन्ताविर्भावेण सरसमुपवर्ण्य तद्वर्णनेऽपि लोकोत्तरनायिकाप्रतीतिं सहृदयानामुत्पाद्य प्रवेशसूचितनायिकाप्रवेशमाह— **तत इति** ॥ अतः परं नायिकाया अपि मदनावस्थावर्णनेन विप्रलम्भः परिपोष्यते । अथ पूर्वमेव गुणश्रवणेनाग्निमित्रे राज्यङ्कुरितानुरागा स्वजनसंमत्या तं वरत्वेन सङ्कल्पितवती पुनर्धारिण्याः परिजनपदे वर्तमाना दैवान्नाट्याचार्ययोः कलहेन निमित्तेन साक्षाद्राजदर्शनं लब्धवती ततश्च वर्धमानरागा औत्सुक्यचिन्तादिभिर्भावैरभिभूयमाना कामबाधामसहमाना मालविका देव्या अशोकदोहदनिर्वर्तनाय नियुक्ता

---

१. विशेषितगुणो.

मअणो मं णइस्सदि । (कतिचित्पदानि गत्वा) कहिं खु पत्थिदह्मि ! (स्मृतिमभिनीय) आः संदिट्ठह्मि देवीए—गोदमचावलादो दोळापरिब्भट्टाए सरुजो मह चलणो । तुमं दाव गदुअ तवणीआसोअस्स दोहदं णिव्वट्टेहि । जदि सो पञ्चरत्तब्भन्दरे कुसुमं दंसेदि, तदो अहं तुह (अन्तरा निःश्वस्य) अहिलासपूरइत्तअं पसादं दाइस्सं ति । ता जाव णिओअभूमिं पुढमं गदा होमि । जाव अणुपदं मह चलणालंकारहत्थाए बउलावलिआए आअन्दव्वं, परिदेवइस्सं दाव वीसद्धं मुहुत्तअं । (इति परिक्रामति ।)

अविज्ञातहृदयं भर्तारमभिलषन्त्यात्मनोऽपि तावल्लज्जे । कुतो विभवः स्निग्धस्य सखीजनस्येमं वृत्तान्तमाख्यातुम् । न जानेऽप्रतीकारगुरुकां वेदनां कियन्तं कालं मदनो मां नेष्यति । कुत्र खलु प्रस्थितास्मि । आः संदिष्टास्मि देव्या 'गौतमचापलाद्दोलापरिभ्रष्टायाः सरुजो मम चरणः । त्वं तावद्गत्वा तपनीयाशोकस्य दोहदं निर्वर्तय । यदि स पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति, ततोऽहं तवाभिलाषपूर-

---

तदर्थं प्रमदवनमुपसरन्ती स्वावस्थां स्वयमनुसंदधाति—**अविज्ञातेत्यादिना** ॥ अविज्ञातं हृदयं यस्य तं भर्तारमभिलषन्तीत्यनेन लज्जाहेतुरविमृश्यकारित्वं द्योत्यते । **आत्मनोऽपीति** ॥ एतद्बोधने किमुतान्यस्मादित्यपिशब्देन द्योत्यते । अत एवाह—**कुत इति** ॥ कुतः न कुतोऽपि । **विभवः** सामर्थ्यम् । ममेति शेषः । स्निग्धस्येत्याख्यानयोग्यत्वं ततो लज्जोत्पत्तेरनर्हत्वं च द्योतयति । **सखीजनस्य** सखीजनाय **इमं वृत्तान्तं** भर्त्रभिलाषरूपम् । स्निग्धमपि सखीजनमिमं वृत्तान्तं बोधयितुं लज्जया न पारयामीत्यर्थः । एवमुपायमपश्यन्त्याह— **न जान इति** ॥ अप्रतीकारा अत एव गुरुका दुर्वहा च तां वेदनां दुःखम् । 'अकथितम्' इत्यनेनास्य कर्मत्वम् । मामिति मुख्यं कर्म । कालमिति अत्यन्तसंयोगे द्वितीया । मदयति हर्षयतीति मदन इत्यनेन कथं स दुःखं जनयतीति द्योत्यते । मदनः मामप्रतीकारगुरुकां वेदनां कियन्तं कालं नेष्यति । न जान इत्यनेन भर्तृलाभेन मरणेन वा वेदनानिवृत्तिस्तत्र भर्तुर्दुर्लभत्वान्मरणेनैव वेदनानिवृत्तिर्भाविनीति द्योत्यते । अत्र चिन्तौत्सुक्यदैन्यादयो भावा व्यज्यन्ते । मनस्सङ्गसंकल्पाद्यवस्थाश्च । कुत्र खलु प्रस्थितास्मीत्यनेन मोहावस्था च । आ इति स्मरणे । **संदिष्टा** आदिष्टा । तत्प्रकारमाह— **गौतमेत्यादि** ॥ **तपनीयेति** ॥ अशोकपुष्पस्य सुवर्णवर्णत्वात्तत्संज्ञा । दोहदमलङ्कृतपादार्पणरूपम् । यथोक्तं— 'पादाघातादशोकस्तिलककुरवकौ वीक्षणालिङ्गनाभ्याम्' इत्यादि । पञ्चानां रात्रीणां समाहारः पञ्चरात्रं

यितृकं प्रसादं दास्यामि' इति । तद्यावन्नियोगभूमिं प्रथमं गता भवामि। यावदनुपदं मम चरणालंकारहस्तया बकुलावलिकयाऽऽगन्तव्यम्, परिदेवयिष्ये तावद्विस्रब्धं मुहूर्तकम् ।

**विदूषकः**—(दृष्ट्वा) हीही इअं खु सीहुपाणुव्वेजिदस्स मच्छण्डिआ उवणदा ।

हीही इयं खलु सीधुपानोद्वेजितस्य मत्स्यण्डिकोपनता ।

**राजा**—अये, किमेतत् ।

**विदूषकः**—एसा[1] खु णादिपरिक्खिदवेसा[2] ऊसुआ विअ एआइणी मालविआ अदूरे वट्टदि ।

एषा[3] खलु नातिपरिष्कृतवेषोत्सुकेवैकाकिनी[4] मालविकाऽदूरे वर्तते ।

---

तस्याभ्यन्तरे मध्ये । **निःश्वस्येति** ॥ स्वाभिलाषस्य राजसमागमविषयकत्वात्तस्य च दुर्घटत्वात्तदालोच्य विषादेन निःश्वासः । अभिलाषपूरयितृकमिति सामान्येनोक्तिः । **प्रसादं** पारितोषिकम् दास्यामीति संदिष्टेति संबन्धः ॥ पूर्वमेवाकृत्या प्रकृत्या च मालविकायामुदितवात्सल्या पुनश्च गीतनृत्तादिकलायां नैपुण्यातिशयदर्शनेनाधिकस्नेहा तस्याः भर्तुश्च परस्परानुरागमालक्षितवती पातिव्रताकुलमौलिमालिका धारिणीदेवी यद्यस्या रूपाद्यनुरूपमाभिजात्यमपि स्यात् तदैतां भर्त्रे दास्यामीति संकल्प्य उत्तमस्त्रीणां पादार्पणेनाशोकः पुष्प्यतीति प्रसिद्धयाभिजात्यं परीक्षितुकामा तस्या बहुमतिं च कर्तुकामा तामेवाशोकदोहदनिर्वर्तने नियुक्तवती अभिलाषपूरयितृकमित्यादिप्रतिज्ञां च कृतवतीत्यतो देव्या आश्रितवात्सल्यभर्तृभक्तिप्रमुखा गुणाः प्रत्याय्यन्ते महाकविनेति ध्येयम् ॥ एवं कर्तव्यं स्मृत्वाह—**तदिति** ॥ यावद्भवामीत्यन्वयः । **नियोगभूमिं** नियोगानुष्ठानस्थलम् । **प्रथमं** बकुलावल्या आगमनात्पूर्वम् । तत्फलमाह—**यावदिति** ॥ यावदागन्तव्यं तावत्परिदेविष्ये विलापं करिष्ये । तद्धि किंचिद्दुःखशामकम् । विदूषको दूरतस्तामवलोक्याह—**ही हीति** ॥ ही हीत्यतर्कितोपगमनजनिते विस्मये । इयमित्यङ्गुल्या निर्देशः । सीधुर्मद्यम् । **मत्स्यण्डिका** खण्डसिता । सा ह्यतिमधुरा आम्लरससीधुपानोद्वेजितस्यात्यन्तं रुचिता । अत्राप्रस्तुतप्रशंसा । अन्तःपुरस्त्रीजनोपभोगेनोद्वेजितस्य तवात्यन्तरुचिता काचिदुपस्थितेत्यर्थः । केचित्तु मत्स्यण्डिका हि मद्यपानविह्वलस्य मदप्रशमने उपकारिका तद्वन्मदनव्याधिपीडितस्य तव तत्पीडाप्रशमनोपयोगिनीयमुपस्थितेति भावार्थ इत्याहुः । तद्विवक्षितार्थस्यास्फुटत्वात् पृच्छति—**किमेतदिति** ॥ स्पष्टमाह—**एषेति** ॥ नातिपरिष्कृतवेषेत्यनेन भूषणादौ माल-

---

१. एसा णादिपरिआरवेसा ऊसुअवअणा एआइणी २. पज्जत्तवेसा पज्जूसुआ विअ
३. एषा नातिपरिचारवेषोत्सुकवदनैकाकिनी ४. पर्याप्तवेषा पर्युत्सुका.

राजा—(सहर्षम्) कथं मालविका ।

विदूषकः—अह इं । अथ किम् ।

राजा—शक्यमिदानीं जीवितमवलम्बितुम् ।

त्वदुपलभ्य समीपगतां प्रियां
हृदयमुच्छ्वसितं मम विक्लबम् ।
तरुवृतां पथिकस्य पिपासतः
सरितमारसितादिव सारसात् ॥ ६ ॥

अथ क तत्रभवती ।

विदूषकः— एसा तरुराइमज्झादो णिक्कन्दा इदो एव्व आअच्छदि ।
एषा तरुराजिमध्यान्निष्कान्तेत एवागच्छति ।

राजा—(विलोक्य सहर्षम् ) वयस्य, पश्याम्येनाम् ।

विपुलं नितम्बबिम्बे मध्ये क्षामं समुन्नतं कुचयोः ।
अत्यायतं नयनयोर्मम जीवितमेतदायाति ॥ ७ ॥

---

विकाया अनादरो गम्यते । तेनारतिर्नामावस्था च । अत्र हेतुं संभाव्याह—**उत्सुकेवेति** ॥ उत्कण्ठितेवेत्यर्थः । अलभ्यविषये राग इत्याद्युत्कण्ठालक्षणम् । औत्सुक्यातिशयेन संशयं परिहर्तुं पुनः पृच्छति—**कथमिति** ॥ अथ किमित्यङ्गीकारे । तामपश्यन्नपि तद्वचनेनाश्वसन्नाह—**शक्यमिति** ॥ **जीवितमवलम्बितुं** प्राणधारणं कर्तुं शक्यमिति । अन्यथा तदशक्यमिति भावः । कुत इत्यत्राह—**त्वदिति** ॥ आरसितात् एषेत्यादिवचनमुक्तवतः त्वत् त्वत्तः त्वद्वचनादिति यावत्, तरुभिः वृक्षैः वृतां प्रियां समीपगताम् उपलभ्य ज्ञात्वा पिपासतः अनुभवितुमिच्छोः मम। आरसितात् शब्दितात् सारसात् जलपक्षिविशेषात् सारसारसनादिति यावत्, तरुवृतां सरितं नदीं समीपगतामुपलभ्य पिपासतः जलपानमिच्छतः पथिकस्येवेत्युपमा। विक्लबं हृदयमुच्छ्वसितमित्यन्वयः । पन्थानं गच्छति पथिक इति तदुपमया स्वस्य वैवश्यातिशयः पिपासातिशयश्च मालविकायाः सरिदुपमयानुभवयोग्यत्वादिकं च द्योत्यते । मृगयादौ स्वानुभूतोऽयं दृष्टान्त उक्तः । अत्र संचिन्त्यमानार्थप्राप्त्या क्रमो नामाङ्गम् । द्रुतविलम्बितं वृत्तम् ॥ तद्दर्शनोत्सुकः पृच्छति—**केति** ॥ तत्र भवतीति प्रशंसागर्भं वचनम् । **एषेत्यादि** ॥ आगच्छतीत्यत्र परावर्तमाना दृश्यत इति क्वचित्पाठः । **पश्याम्येनामिति** ॥ पश्यामीति तिङन्तेन दर्शनस्य प्राधान्यं द्योत्यते । तेन दर्शनस्य परमनिर्वृतिहेतुत्वं च । तस्याः सौन्दर्यनिर्वर्णनपूर्वकमाह—

---

१. आत्मानं २. तरुवृतं ३. जलार्थिनः ४. सलिलं ५. परावट्टन्दी दीसइ
६. परावर्तमाना दृश्यते.

सखे, पूर्वस्मादवस्थान्तरमुपारूढा तत्रभवती । तथा हि ।

**शरकाण्डपाण्डुगण्डस्थलेयमाभाति परिमिताभरणा ।**
**माधवपरिणतपत्रा कतिपयकुसुमेव कुन्दलता ॥ ८ ॥**

**विदूषकः**— एसावि भवं विअ मअणव्वाहिणा परामिट्ठा दीसइ ।

एषापि भवानिव मदनव्याधिना परामृष्टा दृश्यते ।

**राजा**—सौहार्दमेवं पश्यति ।

**मालविका**—अअं सो ललिअदोहलावेक्खी अगहीदकुसुमणेवच्छो उक्कण्ठिदाए मह अणुकरेदि असोओ । जाव से पच्छाअसीदले सिलापट्टए णिसण्णा अत्ताणं विणोदेमि ।

अयं स ललितदोहदापेक्षी अगृहीतकुसुमनेपथ्य उत्कण्ठिताया ममानुकरोत्यशोकः । यावदस्य प्रच्छायशीतले शिलापट्टके निषण्णात्मानं विनोदयामि ।

---

**विपुलमिति ॥** नितम्बबिम्बं वर्तुलो नितम्बः । वाच्यार्थः स्पष्टः । अत्र परमप्रेमास्पदत्वादिना जीवितसाधर्म्यात्तत्त्वाध्यवसाय इति रूपकातिशयोक्तिः । कार्यकारणभावसंबन्धेन जीवितहेतौ जीवितत्वाध्यवसाय इति वा । अनेनैतदलाभे जीवितापायो भावीति द्योत्यते । विपुलमित्यादौ विषयभेदेनानेकधोल्लेखनादुल्लेखालङ्कारश्च । आर्या वृत्तम् । तां सादरमवलोकयन् पुनरप्याह— **सख इत्यादि ॥** संबुद्ध्या एतदवस्थान्तरप्राप्तिः अस्याः किंनिमित्तेत्यालोच्यतामिति द्योत्यते । **पूर्वस्मात्** पूर्वानुभूतावस्थान्तरात् । अनेन नृत्तसमयावस्थाविशेषानुस्मरणं द्योत्यते । **अवस्थान्तरम्** अवस्थाविशेषम् । तदेवाह— **शरेति ॥** शरस्य वेणुविशेषस्य तृणविशेषस्य वा यः काण्डः दण्डः स इव पाण्डु धवलं गण्डस्थलं यस्याः सा । **परिमिताभरणा** स्वल्पाभरणा । **इयं** दृश्यमाना मालविका । माधवेन परिणतानि पत्राणि यस्याः सा । परिणतत्वोक्त्या धावळ्यं गम्यते । कतिपयान्यल्पानि कुसुमानि यस्याः सा । इयमित्यस्यात्रापि सम्बन्धः । उद्यानेऽस्मिन् दृश्यमानेत्यर्थः । कुन्दलतेवेत्युपमायाम् । **आभाति** विशेषेण शोभते । अत्रोपमया कार्श्येऽपि प्रियदर्शनत्वं तेन लावण्यातिशयश्च द्योत्यते । तेन किमियं मदनपीडितेति राज्ञो विचिकित्सा च प्रकाश्यते । विरहिणीनां हि कार्श्यादिसद्भावेऽपि लावण्यातिशयो भवति । आर्या वृत्तम् । विदूषकस्तां निर्वर्ण्याह— **एषापीति** । एषापि न केवलं भवानित्यपिशब्देन द्योत्यते । **मदनव्याधिना** मदनरूपेण रोगेण परामृष्टा संस्पृष्टा विरहोत्कण्ठितेत्यर्थः । **दृश्यते** मया ज्ञायते । तत्र विश्वासमलभमान आह— **सौहार्दमिति ॥ पश्यति** संभावयति । अत्र सुहृद्गतस्य दर्शनस्य सौहार्दे आरोपश्चारुत्व-

---

१. तिमनोहरमव २. सुउमालदोहला ३. सुकुमारदोहदा.

**विदूषकः**—सुदं भवदा। उक्कण्ठिदम्हि त्ति तत्तहोदीए मन्तिदं।
श्रुतं भवता। उत्कण्ठितास्मीति तत्रभवत्या मन्त्रितम्।

**राजा**—नैतावता भवन्तं प्रसन्नतर्कं मन्ये। कुतः।

वोढा कुरवकरजसां किसलयपुटभेदशीकरानुगतः।
अनिमित्तामुत्कण्ठामपि जनयति मलयवातोऽयम्॥ ९॥

(मालविकोपविष्टा।)

**राजा**—वयस्य, इतस्तावत्। आवां लतान्तरितौ भवावः।

---

कारी। यथा चैतत्तथा व्यक्तं व्यक्तिविवेके। अशोकसंनिहिताह— **अयमिति**॥ **सः** यद्दोहदनिर्वर्तनाय नियुक्ता स इत्यर्थः। अयं सः अशोकः **उत्कण्ठिताया ममानुकरोतीति**॥ उत्कण्ठितां मां सदृशीकरोतीत्यर्थः। तदुपपादकं—**ललितेत्यादि**॥ ललितदोहदं नारीपादार्पणरूपमपेक्षत इति तथा। अगृहीतं कुसुममेव नेपथ्यं येन सः। मालविकापि राजसमागमरूपललितदोहदापेक्षिणी अगृहीतनेपथ्या च। अत्रोपमया मालविकाया अशोके स्नेहः तेन तद्दोहदनिर्वर्तने तात्पर्यं च गम्यते। स्वतर्कणानुरूपं मालविकावचनमाकर्ण्य सहर्षं पृच्छति—**श्रुतमिति**॥ काक्वा प्रश्नः। अपायदर्शी स्नेह इति न्यायेनापायमाशङ्कमान आह—**नैतावतेति**। **एतावता** उत्कण्ठितास्मीति वचनमात्रेण **भवन्तम्** ऊहापोहकुशलमपि त्वां प्रसन्नः निर्दोषः तर्कः विरहोत्कण्ठितत्वानुमानं यस्य तम्। प्रसन्नप्रायस्ते तर्क इति मालतीमाधवे। **न मन्ये** प्रियविरहेणेव हेत्वन्तरेणापि जनानामुत्कण्ठासंभवादियं विरहोत्कण्ठितेति तव तर्कणं साध्वेवेति न प्रत्येमीत्यर्थः। अनुभूयमानं संभावितहेत्वन्तरमाह—**वोढेति**॥ कुरवकानां कुरवकपुष्पाणां यानि रजांसि तेषां वोढेत्यनेन सौरभ्यं द्योत्यते। किसलयानां पुटानि संश्लेषात् भिनत्तीति किसलयपुटभेदः। कर्मण्यण्। स चासौ शीकरैरनुगतश्च। भेदेन भेदनेन हेतुना तत्संबन्धिभिः शीकरैरनुगत इति वा। अनेन मान्द्यं शैत्यं च द्योत्यते। अयमित्यनेनोत्कण्ठाजननस्य स्वानुभवसाक्षिकत्वं द्योत्यते। मलयवात इत्यनेनोत्कण्ठाजननसामर्थ्यं च। अनिमित्तामपि प्रियविरहरूपप्रसिद्धहेतुं विनापि उत्कण्ठामौत्सुक्यम् जनयति युवजनस्येति शेषः। प्रियजनविशेषविषयकाभिलाषानुदयेऽपि युवजनस्य मलयवाताद्युद्दीपकसद्भावे कामसुखानुभवस्येच्छया तदलाभेन च मनोवेदनारूपोत्कण्ठा भवतीत्यर्थः। अत्र विशेषणयोः साभिप्रायत्वात् परिकरः, सामान्यनिबन्धनाप्रस्तुतप्रशंसा च, अनिमित्तामपि जनयतीत्यत्र मतावशेषे विभावना च। एवमेव मेघे प्रयोगः—'मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः' इति। आर्या च्छन्दः। उपविष्टां मालविकामवलोक्य तद्वचस्तत्त्वजिज्ञासुस्तद्दिदृक्षुश्चाह— **वयस्येति**॥ राजानं भीषयितुं नर्मवचनमाह—

---

१. तत्तहोदी मन्तेदि २. तत्रभवती मन्त्रयते ३. अनिमित्तोत्कण्ठामपि जनयति मनसो मलयवातः।

**विदूषकः**—इरावदिं विअ अदूरे पेक्खामि[1] ।
इरावतीमिवादूरे [2]प्रेक्षे ।

**राजा**—नहि कमलिनीं दृष्ट्वा[3] ग्राहमवेक्षते मतङ्गजः ।

(इति विलोकयन्स्थितः ।)

**मालविका**—हिअअ, णिरवलम्बादो[4] मणोरहादो विरम । किं मं आआसेसि ।
हृदय निरवलम्बान्मनोरथाद्विरम[5] । किं मामायासयसि ।

(विदूषको राजानं वीक्षते ।)

**राजा**—प्रिये, पश्य महत्त्वं[6] स्नेहस्य ।

औत्सुक्यहेतुं विवृणोषि न[7] त्वं
तत्त्वावबोधैकफलो न तर्कः[8] ।
तथापि रम्भोरु करोमि लक्ष्य-
मात्मानमेषां परिदेवितानाम् ॥ १० ॥

---

**इरावतीमिवादूरे प्रेक्ष इति** ॥ इरावतीं समीपमागच्छन्तीमिव संभावयामीत्यर्थः । प्रेक्ष इत्यत्र समर्थय इति च पाठः । इरावत्या आगमनेऽपि न भीतिरित्याह— **नहीति** ॥ **ग्राहं** नक्रं **नावेक्षते** न गणयति । तं गणयित्वा ततो न बिभेतीत्यर्थः । अत्राप्रस्तुतप्रशंसा । यथा कमलिनीं दृष्ट्वा तत्र प्रविविक्षुर्गजस्तत्स्थितं ग्राहं विचिन्त्य ततो न बिभेति न वा तत्प्रवेशं परिहरति तथा मालविकां निर्विविक्षुरहमन्तिकस्थाया अपि इरावत्या न बिभेमि न वा एतद्दर्शनादिकं परिहरामीति भावः । इरावत्या अचिरादागमनमनेन कविना सूच्यते । पुनरपि नायिका सनिर्वेदमाह— **हृदयेति** ॥ **निरवलम्बात्** फलोत्पादकवस्तुरूपावलम्बशून्यात् । निष्फलादिति यावत् । **राजानं वीक्षत इति** ॥ एतद्वचनं राजा शृणोति न वेति ज्ञातुं वीक्षणम् । मालविकायास्तद्वचनमाकर्ण्य तां संबोध्य स्वयमाह—**प्रिय इत्यादि** ॥ प्रीणातीति प्रिया इत्यन्वर्था संबुद्धिः । त्वं **स्नेहस्य** त्वद्विषयकानुरागस्य **महत्त्वं** गौरवम् । वामतामिति च पाठः । तथाभूते अतथाभूते वा वस्तुनि तथाभूतत्वबुद्धिजनकत्वरूपं कुटिलत्वमिति तदर्थः । **पश्येति** ॥ कुत इत्यत्राह— **औत्सुक्येति** ॥ त्वमौत्सुक्यहेतुं न विवृणोषि उत्कण्ठाहेतुरयमिति विशेषतो न प्रकटीकरोषि । ननु स स्वयमनुमीयतामित्यत्राह— **तत्त्वेति** ॥ तत्त्वावबोधः

---

१. समत्थेमि २. समर्थये ३. लब्ध्वा ४. णिरवलंबणादो अदिभूमिलंघिणो ते मणोरहादो विरम । किं मं आअसिअ ५. निरवलम्बनादतिभूमिलङ्घिनस्ते मनोरथाद्विरम । किं माम् आयस्य ६. वामतां ७. तत्त्वं ८. रसो.

**विदूषकः**—संपदं भवदो णिस्संसअं भविस्सदि । एसा अप्पिदमअणसंदेसा विवित्ते णं बउलावलिआ उवट्ठिदा ।

सांप्रतं भवतो निःसंशयं भविष्यति । एषार्पितमदनसंदेशा विविक्ते एनां बकुलावलिकोपस्थिता ।

**राजा**—अपि स्मरेदस्मदभ्यर्थनाम् ।

**विदूषकः**—किं दाणिं एसा दासीए दुहिदा तुह गुरुअं संदेसं विसुमरेदि । अहं वि दाव ण विसुमरेमि ।

किमिदानीमेषा दास्या दुहिता तव गुरुकं संदेशं विस्मरति । अहमपि तावन्न विस्मरामि ।

(प्रविश्य चरणालंकारहस्ता)

**बकुलावलिका**—अवि सुहं सहीए । अपि सुखं सख्यः ।

**मालविका**—अह्मो बउलावलिआ । सहि, साअदं दे । उवविस ।

अहो बकुलावलिका । सखि, स्वागतं ते । उपविश ।

**बकुलावलिका**—(उपविश्य) हला, तुमं दाव दाणिं देवीए जोग्गदारिएत्ति णिउत्ता । ता एक्कं दे चलणं उवणेहि । जाव सालत्तअं सणेउरं करेमि ।

---

अयमौत्सुक्यहेतुरिति यथार्थानुमतिः । स एव एकं फलं यस्य सः तर्कः अनुमानं न । तत्तल्लिङ्गे व्यभिचारादिसंभावनया तदनुमापकं लिङ्गं नोपलभ्यत इत्यर्थः । तत्त्वावबोधैकरस इति च पाठः । तत्त्वावबोध एव एको रसः प्रीतिकारी येनेति तदर्थः । **तथापि** तद्वचनरूपशब्दस्यानुमानस्य च बोधकारणस्याभावेऽपि । हे रम्भोरु ऊरुसौन्दर्योक्त्या तदनुभवौत्सुक्यातिशयो गम्यते । अहमिति शेषः । तदनुरक्तोऽहमित्यर्थः । **आत्मानं** माम् । **एषां** त्वदीयानां श्रूयमाणानां **परिदेवितानां** विलापानां **लक्ष्यम्** उद्देश्यं करोमि, लक्ष्यत्वेन जानामीत्यर्थः ॥ तवोत्कण्ठा मन्निमित्तिका तद्धेतुकश्चायं विलाप इति विलापस्य मन्निमित्तकत्वं त्वद्विषयकरागातिशयादहं प्रत्येमीत्यर्थः । अतः स्नेहस्य महत्त्वं पश्येति संबन्धः । यथा शाकुन्तले—'कामी स्वतां पश्यति' इति । अत्र विभावना । उपजातिवृत्तम् । **सांप्रतमिति** ॥ निःसंशयं संशयाभावः निश्चय इति यावत् । अर्पितः मया दत्तः बोधित इति यावत् मदनसंदेशः त्वदीयकामसन्देशः यस्याः सा । **विविक्ते** विजने । अनेन रहस्यप्रकाशनयोग्यता देशस्य सूच्यते । सविषादं पृच्छति—**अपीति** ॥ एषेति शेषः । **किमित्यादि** ॥ किं विस्मरतीत्यन्वयः । नैव विस्मरतीत्यर्थः । **दास्या दुहितेति** । 'षष्ठ्या आक्रोशे'

---

१. दसावस्म २. जोग्गदाए.

हला, त्वं तावदिदानीं देव्या योग्यदारिकेति[1] नियुक्ता। तस्मादेकं ते चरणमुपनय। यावत्सालक्तकं सनूपुरं करोमि।

**मालविका**—(आत्मगतम्) हिअअ, अलं सुहिददाए अअं विहवो उवट्ठिदोत्ति। कहं दाणिं अत्ताणं मोचेअं। अहवा एदं एव्व मिच्चुमण्डणं मे भविस्सदि।

हृदय, अलं सुखिततया अयं विभव उपस्थित इति। कथमिदानीमात्मानं मोचयेयम्। अथवैतदेव मृत्युमण्डनं मे भविष्यति।

**बकुलावलिका**—किं विआरेसि। ऊसुआ खु इमस्स तवणीआसोअस्स मुउलुग्गमे[2] देवी।

किं विचारयसि। उत्सुका खल्वस्य तपनीयाशोकस्य मुकुलोद्गमे[3] देवी।

**राजा**—कथमशोकदोहदनिमित्तोऽयमारम्भः।

**विदूषकः**—किंणु[4] खु ण जाणासि अकालणादो देवी इमं अन्देउ-

इत्यलुक्। तवेति गुरुकमिति चाविस्मरणीयत्वे हेतुः। **अहमपि** अतिमन्दबुद्धिरहमपि। अत्र काव्यार्थापत्तिः। **हलेत्यादि॥ योग्यदारिका** अशोकदोहदनिर्वर्तने योग्या कन्यका। इतीति हेतौ। योग्यतयेति च पाठः। पुनरपि नायिका सनिर्वेदं स्वयमाह— **हृदयेत्यादि**॥ सुखमस्य संजातं सुखितं तस्य भावस्तत्ता संतोष इत्यर्थः। तया अलमिति निषेधे। सुखहेतुमाह— **अयमिति**॥ अयं विभवः अलक्तकरसनिषेकभूषणधारणादिरूपः अयं विभव उपस्थित इति हर्षो मास्त्वित्यर्थः। विभवस्यास्य कामव्यथोद्दीपने पर्यवसानादिति भावः। अत एव चिन्तयति— **कथमिति**॥ मोचयेयम् अस्मादिति शेषः॥ पुनर्विचार्याह— **अथवेति**॥ मृत्युमण्डनमचिरभाविनो मरणस्यालङ्करणम्। अत्र निर्वेदचिन्तौत्सुक्यादयो बहवो भावा व्यज्यन्ते। तस्या मनोगतं जानती सखी पृच्छति—**किमिति**॥ किं विचारयसि। विचारोऽत्र न कार्य इत्यर्थः। पादमुपनयेति भावः। उक्तार्थे हेतुः— **उत्सुकेत्यादि**॥ उत्सुका कालक्षेपासहिष्णुः। अत्रोत्सुकेति मालविकाविशेषणतयापि स्फुरति। अनयोरेतत्संभाषणस्य फलं राजमुखेन कविर्दर्शयति— **राजा कथमित्यादि**॥ कथमिति वितर्के। ननु मद्दोहदपूरणनिमित्तोऽयमारम्भ इति राज्ञो विषादश्च कथंशब्देन गम्यते। राज्ञस्तथा संभावनायाः पूर्वं भाव्यत्वात्। **अशोकेत्यादि**॥ तदुक्तमनुवदन्नाह— **किंन्वित्यादि**॥ हला

१. योग्यतया २. कुसुमुग्गमे ३. कुसुमोद्गमे ४. किं णु खु जाणासि तुमं मह कालणादो देवी इमं अन्तेउरणवच्छेण जोअइस्सदित्ति।

रणेवच्छेण ण संजोअइस्सदित्ति ।

[1]किंनु खलु न जानासि अकारणाद्देवीमामन्तःपुरनेपथ्येन न संयोजयिष्यतीति ।

मालविका—हला, मरिसेहि दाव णं ।

हला, मर्षय तावदेनम् । (इति पादमुपहरति ।)

बकुलावलिका—अइ, सरीरं सि मे ।

अयि, शरीरमसि मे । (इति नाट्येन चरणालंकारमारभते ।)

राजा—

चरणान्तनिवेशितां प्रियायाः
सरसां पश्य वयस्य रागरेखाम् ।
प्रथमामिव पल्लवप्रसूतिं
हरदग्धस्य मनोभवद्रुमस्य ॥ ११ ॥

विदूषकः—चलणाणुरूवो खु तत्तहोदीए अहिआरो उवक्खित्तो ।

चरणानुरूपः खलु तत्रभवत्या अधिकार उपक्षिप्तः ।

राजा—[2]सम्यगाह भवान् ।

---

मर्षयेति ॥ त्वदङ्गे पादार्पणरूपमविनयाचरणं क्षमस्वेत्यर्थः । शरीरमसीति ॥ अतो नायमविनय इति भावः । चरणालङ्कारमिति ॥ यावकरसनिषेकरूप-चरणसंस्कारमित्यर्थः ॥ अथालक्तकरसनिषिक्तचरणाग्रां तामवलोक्य सकौतुक-माह— चरणेति ॥ हरेण परमेश्वरेण दग्धस्य भस्मीकृतस्य । मनोभव एव द्रुम इति रूपकमुत्प्रेक्षाङ्गम् । तस्य प्रथमामाद्याम् । अनेन लोभनीयत्वादिकं द्योत्यते । पल्लवस्य प्रसूतिमुत्पत्तिं प्रथमोत्पन्नं पल्लवमित्यर्थः । वृक्षाणां दाहे कृते केषांचित् पल्लवो ह्युत्पद्यते । इवेत्युत्प्रेक्षायाम् । स्थितां प्रियायाश्चरणान्ते पादाग्रे निवेशितां योजितां सरसामार्द्रां रागरेखां लाक्षारसशोणरेखां हे वयस्य पश्य । द्रष्टव्येयमिति भावः । अत्र रागरेखायाः शोणकृशाकृतित्वादिनिमित्तेन तादृशपल्लवप्रसूतित्वो-त्प्रेक्षा । अनया मदनद्रुमोऽचिरादेव पुष्पितः फलितश्च भविष्यतीति ध्वन्यते ॥ औपच्छन्दसिकं वृत्तम् । नर्मसचिवोऽपि चरणं प्रशंसन्नाह— चरणेति ॥ तत्र भवत्या देव्या उपक्षिप्तः नियुक्तः अधिकारः चरणानुरूपः खलु । अस्या इति शेषः । तत्रभवत्या इति षष्ठ्यन्तं वा । तदुक्तमनुमोदते—सम्यगित्यादि ॥ नवेति ॥ बालेयम् । नवाकेसलयस्य राग इव रागो रक्तिमा यस्य तेन । स्फुरिताः नखरुचः

---

१. किं नु खलु जानासि त्वम् । मम कारणाद्देवीमामन्तःपुरनेपथ्येन योजयि-ष्यतीति । २. सम्यगभिहितं भवता.

नवकिसलयरागेणाग्रपादेन[1] बाला
स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन ।
अकुसुमितमशोकं[2] दोहदापेक्षया वा
प्रणमितशिरसं[3] वा कान्तमार्द्रापराधम् ॥ १२ ॥

विदूषकः—पहरिस्सदि[4] तत्तहोदी तुमं अवरद्धम् ।
प्रहरिष्यति[5] तत्रभवती त्वामपराद्धम् ।

राजा—मूर्ध्ना प्रतिगृहीतं वचः सिद्धिदर्शिनो ब्राह्मणस्य ।

(ततः प्रविशति युक्तमदा इरावती चेटी च ।)

इरावती—हञ्जे णिउणिए, सुणोमि बहुसो मदो किल इत्थिआजणस्स विसेसमण्डणं ति । अवि सच्चो लोअवाओ अअं ।
हञ्जे निपुणिके, शृणोमि बहुशो मदः किल स्त्रीजनस्य विशेषमण्डनमिति । अपि सत्यो लोकवादोऽयम् ।

निपुणिका—पुढमं लोअवाओ एव्व । अज्ज उण सच्चो संवुत्तो ।
प्रथमं लोकवाद एव । अद्य पुनः सत्यः संवृत्तः ।

---

यस्मिस्तेन । विशेषणाभ्यां पादस्य संस्कारालङ्कारान्तरकरणं व्यर्थमिति द्योत्यते । ताडनार्हत्वं च समर्थ्यते । अनेनाग्रपादेन सालक्तकेनास्याः पादाग्रेण । आर्द्रपादेनेति च पाठः । अपकुसुमम् अकुसुमितमिति च पाठः । अत एव दोहदापेक्षया विशिष्टम् । विशेषणे तृतीया । दोहद इच्छा तत्पूर्विका अपेक्षा । प्रसीदेति प्रार्थना इति कान्तेऽप्येतद्योज्यम् । अशोकं वा । आर्द्रः सद्यः कृतः अपराधो यस्य तम् । अत एव प्रणमितशिरसं कान्तं वा । वाशब्दः समुच्चये । द्वौ हन्तुं ताडयितुं अर्हति योग्या भवति । अत्र काव्यलिङ्गम् । प्रकृतस्याशोकस्याप्रकृतस्य कान्तस्य च हननकर्मत्वरूपैकधर्मसंबन्धप्रतिपादनाद्दीपकम् द्वावेव हन्तुमर्हतीत्यस्य प्रतीत्या परिसंख्या चालङ्कारः । एतत्पादताडनमचिरान्मे भवत्वित्याशंसा च राज्ञोऽत्र गम्यते । मालिनी वृत्तम् । तदाशंसां बुद्ध्वाह—**प्रहरिष्यतीत्यादि** ॥ अथेरावत्या ईर्ष्याविप्रलम्भं वर्णयिष्यन्नवसरे विदूषकवचनसूचितं प्रवेशमाह—**तत इत्यादि** ॥ युक्तः संगतो मदो मधुपानजनितमनोविकारविशेषो यस्याः सा । मधुपानमिदं वसन्तोत्सवहेतुकडोलाधिरोहणाद्यङ्गभूतम् । मदावेशं दर्शयितुमादौ तद्वचनं कविरुपन्यस्यति—**इरावतीत्यादि** ॥ **विशेषमण्डनं** विशिष्टं कटकादिभ्यो व्यतिरिक्तमलङ्करणम् । अपीति प्रश्ने । लोकवादपदेन तस्यासत्यत्वसंभावना द्योत्यते । **प्रथममिति** ॥ प्रथमं त्वय्यनुभवात् पूर्वं

---

१. र्द्रपादेन २. अपकुसुमं ३. प्रणिहितशिरसं ४. पारइस्ससि तत्तहोदीए अवरद्धुं ५. पारयिष्यसि तत्रभवत्या अपराद्धुम् .

इरावती—अलं[1] मइ सिणेहेण। कुदो दाणिं अवगदं डोलाघरं पुढमं गदो भट्टेत्ति।

अलं[2] मयि स्नेहेन। कुत इदानीमवगतं डोलागृहं प्रथमं गतो भर्तेति।

निपुणिका—भट्टिणीए अखण्डिदादो पणआदो।

भट्टिन्या अखण्डितात्प्रणयात्।

इरावती—अलं सेवाए। मज्झत्थदं गह्णिअ भणाहि।

अलं सेवया। मध्यस्थतां गृहीत्वा भण।

निपुणिका—वसन्दोवाअणलोलुवेण अज्जगोदमेण कहिदं। तुवरदु भट्टिणी।

वसन्तोपायनलोलुपेनार्यगौतमेन कथितम्। त्वरतां भट्टिनी।

इरावती—(अवस्थासदृशं परिक्रम्य) हञ्जे, मदेण किलामिअमाणं मं अज्जउत्तदंसणे हिअअं तुवरेदि। चलणा उण[3] मग्गे ण प्पसरान्दि।

हञ्जे, मदेन क्लाम्यन्तीं मामार्यपुत्रदर्शने हृदयं त्वरयति। चरणौ पुनर्मार्गे[4] न प्रसरतः।

निपुणिका—णं संपत्तह्म डोलाघरं।

ननु संप्राप्ते स्वो डोलागृहम्।

इरावती—णिउणिए, ण एत्थ अज्जउत्तो दीसइ।

निपुणिके, नात्रार्यपुत्रो दृश्यते।

---

लोकवाद एव। अननुभूतत्वात्तत्र सत्यत्वनिश्चयो नाभूदिति भावः। **अद्य पुनः** त्वयि प्रत्यक्षीभावे तु। **अलमिति**। **स्नेहेन** स्नेहहेतुकया प्रश्नोक्त्या। इदमास्तामित्याशयेन प्रकृतं पृच्छति—**कुत इति**॥ **भट्टिन्या इति**॥ इदानीमित्याद्यनुषज्यते। अखण्डितादखण्डितपूर्वात् प्रणयात्प्रार्थनात्। अनेन प्रणयखण्डनमद्य भावीति कविना सूच्यते। **अलमिति**॥ **सेवया** सेवोचितप्रियवचनेन। **मध्यस्थताम्** अपक्षपातित्वम्। **वसन्तेति**॥ वसन्तोपायनानि वसन्तोत्सवसंबन्ध्युपहारभूतभक्ष्यवस्तूनि तेषु लोलुपेनातिलुब्धेन। **कथितमिति**॥ डोलेत्याद्यनुषङ्गः। **त्वरतां भट्टिनीति**॥ अत इत्यर्थात्। त्वरतां भट्टिनीतीति पाठे त्विति कथितमिति संबन्धः। **अवस्थासदृशं परिक्रम्येति**॥ अवस्था मदावस्था। **हञ्जे**

---

१. संकित्तणसंसिणा अलं सिणेहेण। कहेहि कुदो दाणिं ओगामिदव्वो दोलाघरं पुढमं गदो भट्टा ण वेत्ति २. सङ्कीर्तनशंसिनालं स्नेहेन। कथय कुत इदानीं अवगन्तव्यो दोलागृहं प्रथमं गतो भर्ता न वेति ३. ण मह ४. न मम.

**निपुणिका**—ओलोएदु भट्टिणी । परिहासणिमित्तं कहिं वि गूढेण भट्टिणा होदव्वं । अम्हे वि इमं पिअङ्गुलदापरिक्खित्तं असोअसिलापट्टअं पविसह्म ।

अवलोकयतु भट्टिनी । परिहासनिमित्तं कुत्रापि गूढेन भर्त्रा भवितव्यम् । आवामपीमं प्रियङ्गुलतापरिक्षिप्तमशोकशिलापट्टकं प्रविशावः ।

(इरावती तथा करोति ।)

**निपुणिका**—(परिक्रम्य विलोक्य) ओलोएदु भट्टिणी । चूदङ्कुरं विचिण्णन्दीणं [1]अह्माणं पिपीलिआहिं दंसिदं ।

अवलोकयतु भट्टिनी । चूताङ्कुरं विचिन्वन्त्यो[2]रावयोः पिपीलिकाभिर्दष्टम् ।

**इरावती**—[3]किं विअ एदं । [4]किमिवतत् ।

**निपुणिका**—एसा बउलावलिआ असोअपाअवच्छाआए मालविआए चलणालंकारं णिव्वट्टेदि ।

एषा बकुलावलिकाशोकपादपच्छायायां मालविकायाश्चरणालंकारं निर्वर्तयति ।

**इरावती**—(शङ्कां रूपयित्वा) अभूमी इअं मालविआए । [5]कहं एत्थ तक्केसि ।

अभूमिरियं मालविकायाः । [6]कथमत्र तर्कयसि ।

**निपुणिका**—तक्केमि दोलापरिब्भंसिदाए सरुअचलणाए देवीए असोअदोहलाहिआरे मालविआ णिउत्तेत्ति । अण्णहा कहं देवी

---

**इत्यादि** ॥ स्पष्टम् । **अवलोकयत्विति** ॥ **चूताङ्कुरमित्यादि** ॥ यथावयोश्चूताङ्कुरान्वेषणे क्रियमाणे कदाचिन्मध्ये पिपीलिकादंशो दुःखहेतुर्जायते तथा भर्तुरन्वेषणे मालविकावलोक इति भावः । अत्र ललितमलङ्कारः । अनिष्टोत्पत्त्या विषमं च । चूताङ्कुरमित्यादिना विवक्षितस्योक्तार्थस्यास्फुटत्वात्पृच्छति—**किमिवैतदिति** ॥ विवक्षितं स्फुटयति—**एषेति** ॥ **अभूमिरिति** ॥ इयमभूमिः अयमयोग्यदेशः । अत्र देशे मालविकागमनस्य सङ्गतिर्नेत्यर्थः । पुनश्चरणालंकारनिर्वर्तनस्य कथं वा संगतिरिति भावः । केचित्तु इयं चरणालङ्कारनिर्वर्तनक्रिया मालविकायाश्चेत्या मालविकायाः अभूमिरयोग्येति व्याचक्षते । तत्रोपपत्तिं निरूप्याह—

---

१. अह्माणमिति नास्ति २. आवयोरिति नास्ति ३. कहं विअ ४. कथमिव ५. किं तक्केसि ६. किं तर्कयसि.

सअं धारिअं णूउरजुउलं परिअणस्स अब्भणुजाणिस्सदि ।

तर्कयामि दोलापरिभ्रष्टया सरुजचरणया देव्याशोकदोहद-
दाधिकारे मालविका नियुक्तेति । अन्यथा कथं देवी स्वयं
धारितं नूपुरयुगुलं परिजनस्याभ्यनुज्ञास्यति ।

इरावती—महदी क्खु से संभावणा। महती खल्वस्याः संभावना।

निपुणिका—किं ण अण्णेसीअदि भट्टा । किं नान्विष्यते भर्ता ।

इरावती—हञ्जे, ण मे चलणा अण्णदो पवट्टन्दि । मणो[3] वि किंवि
विआरेदि । आसङ्किदस्स दाव अन्तं गमिस्सं । (मालविकां निर्वर्ण्य
आत्मगतम्) ठाणे क्खु कादरं मे हिअअं ।

हञ्जे न मे चरणावन्यतः प्रवर्तेते । मनो[4]ऽपि किमपि विकार-
यति । आशङ्कितस्य तावदन्तं गमिष्यामि । स्थाने खलु
कातरं मे हृदयम् ।

बकुलावलिका—(मालविकायै चरणं दर्शयन्ती) अवि रोअदि ते
अअं राअरेहाविण्णासो ।

अपि रोचते तेऽयं रागरेखाविन्यासः ।

मालविका—अत्तणो चलण त्ति लज्जेमि णं पसंसिदुं । [6]हेहि केण
पसाहणकलाए अहिविणीदासि ।

तर्कयामीति ॥ स्वयं धारितमित्यन्यजनधारणायोग्यत्वं द्योतयति । सेर्ष्यमाह—
महतीति ॥ इयमिति शेषः । संभावना बहुमतिः। देवीकर्तृकस्वनूपुरयुगलधारणा-
भ्यनुज्ञानपूर्वकोऽशोकदोहदनिर्वर्तनानियोगोऽस्या महाबहुमानहेतुः खल्वित्यर्थः ।
प्रकृतमनुसन्धाय पुनः पृच्छति— किं नान्विष्यते भर्तेति ॥ तत्रोत्तरमाह—
हञ्जे इति । न प्रवर्तेते न प्रसरतः । अत्र हेतुं दर्शयन्त्यन्यदप्याह—मनोऽ-
पीति ॥ मम मनः अन्यत्किमप्याशङ्कते चेत्यर्थः । तर्हि किं कर्तुं व्यवसितमि-
त्यत्राह—आशङ्कितस्येति । आशङ्कितस्य अशोकदोहदपूरणार्थमेव वा अन्यद-
प्युद्दिश्य वेयमत्रागता इत्यादिशङ्कायाः अन्तं पारं निवृत्तिमिति यावत् । तावदादौ
गमिष्यामि पश्चाद्भर्तान्विष्यतामिति भावः । राज्ञो मालविकायामभिलाषमवगच्छन्ती
तस्याः सौन्दर्यातिशयं निर्वर्ण्य पुनः स्वयमाह—स्थान इति ॥ मे हृदयं कातर-
मधीरमाशङ्कितमिति यावत् यत्तत्स्थाने युक्तम् । अनेन किमियं भर्तुः गूढसमा-
गमार्थमागतेति इरावत्याः शङ्का प्रतीयते । पृच्छति— अपि रोचत इति ॥

१. णेति नास्ति २. नेति नास्ति ३. मदो म विआरेदि ४. मदो मां विकार-
यति ५. चलणगदोत्ति ६. तेण पसाहण—

आत्मनश्चरण[1] इति लज्जे एनं प्रशंसितुम् । कथय केन प्रसा[2]-धनकलायामभिविनीतासि ।

**बकुलावलिका**—एत्थ भत्तुणो सीसह्मि ।

अत्र भर्तुः शिष्यास्मि ।

**विदूषकः**—तुवरेहि दाणिं[3] गुरुदक्खिणाए ।

त्वरस्वेदानीं[4] गुरुदक्षिणायै ।

**मालविका**—दिट्ठिआ ण गव्विदासि । दिष्ट्या न गर्वितासि ।

**बकुलावलिका**—उवदेसाणुरूवे चलणे लम्भिअ दाणिं गव्विदा भविस्सं । (आत्मगतम्) हन्त, सिद्धं मे दुच्चम् । (प्रकाशम् रागं विलोक्य) सहि, एक्कस्स दे चलणस्स अवसिदो राअणिक्खेवो । केवलं मुहमारुदो लम्भइदव्वो । अहवा पवादं[5] एदं ठाणं ।

उपदेशानुरूपे चरणे लब्ध्वेदानीं गर्विता भविष्यामि । हन्त, सिद्धं मे दूत्यम् । सखि, एकस्य ते चरणस्यावासितो रागनिक्षेपः । केवलं मुखमारुतो लम्भयितव्यः । अथवा प्रवातमेतत्स्थानम्[6] ।

---

**आत्मन इति** ॥ चरणे इति छेदः । **प्रशंसितुं** रागरेखामिति शेषः । **विनीता** शिक्षिता । प्रकृतानुरोधेनोत्तरमाह— **अत्र भर्तुः शिष्यास्मीति** ॥ राजकथितमदनसंदेशस्योपक्रमोऽयम् । तदाकर्ण्य नर्मसचिवो राजानं नर्मवचनमाह—**त्वरस्वेति** ॥ त्वरया बकुलावलीमुपगच्छ । **गुरुदक्षिणायै** मालविकारूपगुरुदक्षिणामादातुं, यद्वा बकुलावलीं प्रतीदं स्वयं वचनं गुरुदक्षिणायै मालविकारूपगुरुदक्षिणां दातुम् । प्रशंसति—**दिष्ट्येत्यादि** ॥ भर्तुः शिष्यास्मीत्युक्त्या त्वया गर्वाभावः प्रकाशितः । तत् संतोषस्थानमित्यर्थः । चाटुगर्भमाह— **उपदेशेति** ॥ उपदेशानुरूपे यादृशस्य चरणस्य रञ्जनयोग्यत्वं गुरुणोपदिष्टं तादृशे चरणे इत्यर्थः । **लब्ध्वेदानीमिति** ॥ अनेन पूर्वं तादृशस्य चरणस्यालाभो द्योत्यते । **गर्विता भविष्यामीति** ॥ 'चीयते बालिशस्यापि सत्क्षेत्रपतिता कृषिः' इति न्यायेन मम नैपुण्याभावेऽपि त्वच्चरणयोर्गुणोत्कर्षेण तद्रञ्जनस्याप्युत्कर्षसिद्ध्या इतः परं गर्विता भविष्यामीत्यर्थः । अथ रागविन्यासस्य चारुत्वमवलोक्य स्वयमाह—**हन्तेति** ॥ हन्तेति हर्षे । मे दूत्यं दूतीकर्म चरणरञ्जनमिति यावत् । सिद्धं यथावन्निष्पन्नम् । यद्वा नायिकामलङ्कारैरलंकृत्य नायकसमीपप्रापणं दूतीकर्म । अस्याः एतद्देशप्रापणाच्चरणालङ्कारनिष्पादनाच्च तस्य सिद्धप्रायतया

---

१. चरणगत इति २. तेन प्रसाधन ३. दाव णं ४. त्वरय तावदेनां ५. पवादो एव्व अअं पदेसो ६. प्रवात एवायं प्रदेशः

**राजा**—सखे, पश्य पश्य ।

आर्द्रालक्तकमस्याश्चरणं मुखमारुतेन वीजयितुम् ।
प्रतिपन्नः प्रथमतरः संप्रति सेवावकाशो मे ॥ १३ ॥

**विदूषकः**— कुदो दे अणुसओ । चिरं भवदा एदं कमेण अणुहोदव्वं ।

कुतस्तेऽनुशयः । चिरं भवता एतत्क्रमेणानुभवितव्यम् ।

**बकुलावलिका**—सहि, अरुणसदपत्तं विअ सोहदि दे चलणं । सव्वहा भत्तुणो अङ्कपरिवट्टिणी होहि ।

सखि, अरुणशतपत्रमिव शोभते ते चरणम् । सर्वथा भर्तुरङ्कपरिवर्तिनी भव ।

(इरावती निपुणिकामुखमवेक्षते ।)

**राजा**—ममेयमाशीः ।

**मालविका**—हला अवअणीअं मन्तेसि ।

हला अवचनीयं मन्त्रयसे ।

**बकुलावलिका**—मन्तिदव्वं एव्व मए मन्तिदं ।

मन्त्रयितव्यमेव मया मन्त्रितम् ।

---

सिद्धमित्युक्तम् । प्रकाशमाह— **सखीति** ॥ **अवसितः** समाप्तः । **लम्भयितव्यः** अलक्तकशोषणाय चरणं प्रापयितव्यः । पुनर्विचार्याह— **अथवेति** ॥ **प्रवातं** प्रकृष्टवातम् । **आर्द्रेति** ॥ आर्द्रालक्तकमिति वीजने हेतुः । **वीजयितुं** अलक्तकशोषणार्थं फूत्कारकरणं वीजनम् । शोषयितुमिति च पाठः । **प्रथमतरः** आद्यतरः । सेवाया अवकाशः अवसरः प्रतिपन्नः प्राप्त इत्यनेन राज्ञस्तत्करणे तात्पर्यं द्योत्यते । आर्या वृत्तम् । तदवगम्याह—**कुत इत्यादि** ॥ **अनुशयः** अनुतापः । **एतत्** वीजनादिसेवाकर्म । अथ बकुलावलिका मालविकां राज्ञः समागमनेऽनुकूलां कर्तुमारभमाणा प्रशंसापूर्वकमवसरे वदति—**सखीत्यादि** ॥ अरुणं यच्छतपत्रं पद्मं तादिव सौकुमार्यादिना तत्तुल्यं शोभत इति । उत्तमस्त्रीलक्षणमिदं भर्तुरङ्कपरिवर्तित्वयोग्यत्वं द्योत्यते । **निपुणिकामुखमवेक्षत इति** ॥ भर्तुरित्यादिवचनश्रवणजनितेर्ष्याद्यनुभवोऽयम् । किं त्वया श्रुतमिति च प्रकाश्यते । तच्छ्रुत्वा राजा सहर्षमाह—**ममेति** ॥ न मालविकाया इति भावः । आशीर्हि शुभाशंसा । मालविकालाभो हि स्वस्यैवाभ्युदयहेतुरिति राज्ञोऽभिप्रायः । तच्छ्रुत्वा सलज्जासाध्वसाह—**हलेति** ॥ **अवचनीयं** भर्तुरङ्कपरिवर्तनस्यास्मद्विधानां दुष्प्रापत्वान्मां प्रति वक्तु-

---

१. शोषयितुं २. मा अवअणीअं मन्तेहि ३. मा अवचनीयं मन्त्रयस्व.

**मालविका**—पिआ खु अहं तुह । प्रिया खल्वहं तव ।

**बकुलावलिका**—ण केवलं मह । न केवलं मम ।

**मालविका**—कस्स वा अण्णस्स । कस्य वान्यस्य ।

**बकुलावलिका**—गुणेसु अहिणिवेसिणो भत्तुणो वि ।

गुणेष्वभिनिवेशिनो भर्तुरपि ।

**मालविका**—अलीअं मन्तेसि । एदं एव्व मइ णत्थि ।

अलीकं मन्त्रयसे । एतदेव मयि नास्ति ।

**बकुलावलिका**—सच्चं तुइ णत्थि । भत्तुणो किसेसु [1]वरपण्डुरेसु दीसइ अङ्गेसु ।

सत्यं त्वयि नास्ति । भर्तुः कृशेषु [2]वरपाण्डुरेषु दृश्यतेऽङ्गेषु ।

**निपुणिका**—पुढमगणिदं विअ हदासाए उत्तरं ।

प्रथमगणितमिव हताशाया उत्तरम् ।

**बकुलावलिका**—अणुराओ अणुराएण [3]परिक्खिदव्वो त्ति सुअणवअणं पमाणीकरेहि ।

अनुरागोऽनुरागेण [4]परीक्षितव्य इति सुजनवचनं प्रमाणीकुरु ।

---

मयोग्यम् । **मन्त्रयितव्यमेवेति** ॥ तवाङ्कपरिवर्तनयोग्यत्वाद्वचनीयमेव । **प्रिया खल्वहं तवेति** ॥ मयि प्रेम्णा त्वमित्थं वदसीत्यर्थः । राजानुरागं बोधयितु तद्वचनेन लब्धावसराह— **न केवलं ममेति** ॥ प्रियेत्यनुषज्यते । औत्सुक्येन पृच्छति— **कस्येति** ॥ भङ्ग्या प्रतिवक्ति— **गुणेष्विति** ॥ गुणेष्वभिनिवेशिनः अनुरागिण इति हेतुगर्भम् । **भर्तुरपीति** ॥ प्रियेत्यनुषङ्गः । राज्ञः स्वानुरागं निर्णेतुमारभते— **अलीकमिति** ॥ अलीकमसत्यम् । अत्र हेतुमाह— **एतदिति** ॥ एतदेव त्वदुक्तं भर्तुः प्रियत्वम् । एवकारः पौनर्वचनिकः । नास्त्येवेति वा संबन्धः । भर्तुः मद्विषयकं प्रेम नास्त्येवेत्यर्थः । एतदेव मयि नास्तीत्यस्य एतन्मदधिकरणकं नेत्यर्थं परिकल्प्य छलेनाह— **सत्यमिति** ॥ सत्यमित्यनुवादे । त्वदुक्तं सत्यमेवेत्यर्थः । अत्र हेतुमाह— **भर्तुरिति** ॥ एतदित्यनुषज्यते । यतो भर्तुरङ्गेषु कार्श्यादिकार्यमुखेन प्रेम दृश्यते तत इत्यर्थः । एकत्र दृष्टस्यान्यत्रासंभवादिति भावः । तच्छ्रुत्वा सेर्ष्यमाह— **प्रथमेति** । प्रथमगणितमिव पूर्वमेवानया मनसा निरूपितमिव । इवेति संभावनायाम् यद्वा सादृश्ये । यथास्माभिः उत्तरदानात् पूर्वं चिन्तितं तथेत्यर्थः । **हताशाया इति** ॥ बकुलावलिकां प्रति निन्दागर्भोक्तिः । ननु यदि भर्तुरनुरागोऽस्ति तदा कुतो न प्रकाश्यते प्रकाशनमन्तरा च कथं निश्चीयेतेति शङ्कां परिहर्तुं त्वयानु-

---

१. सुन्दरपण्डरेसु २. सुन्दरपाण्डरेषु ३. परिच्छिदव्वो ४. प्रत्येष्टव्यः

**मालविका**--किं अत्तणो छन्देण मन्तेसि ।

किमात्मनश्छन्देन मन्त्रयसे ।

**बकुलावलिका**--णहि णहि । भत्तुणो खु एदाइ पणअमिदुआइ अक्खराइ विंबंदरिदाइं[1] ।

नहि नहि । भर्तुः खल्वेतानि प्रणयमृदुकान्यक्षराणि बिम्बा[2]-न्तरितानि ।

**मालविका**--हला, देविं चिन्तिअ ण मे हिअअस्स पहविस्सं[3] ।

सखि, देवीं चिन्तयित्वा न मे हृदयस्य प्रभविष्यामि[4] ।

**बकुलावलिका**--मुद्धे, भमरसंपादो भविस्सदित्ति वसन्तावदारसव्वस्सं किं ण चूदप्पसवो ओदंसिदव्वो ।

मुग्धे, भ्रमरसंपातो भविष्यतीति वसन्तावतारसर्वस्वं किं न चूतप्रसवोऽवतंसयितव्यः ।

**मालविका**--तुमं दाव दुज्जादे मह अच्चन्दसहाइणी होहि ।

त्वं तावद्दुर्जाते ममात्यन्तसहायिनी भव ।

**बकुलावलिका**--विमद्दसुरही बउलावलिआ खु अहं ।

विमर्दसुरभिर्बकुलावलिका खल्वहम् ।

---

रागे प्रकाशिते भर्ताप्यनुरागं प्रकाशयिष्यतीति सामान्येनाह--**अनुराग इति** ॥ स्त्रीपुंसयोरेकेनान्यानुरागः स्वानुरागप्रकाशनेन परीक्षितव्य इत्यर्थः । एकस्यानुरागे ज्ञातेऽन्यः स्वानुरागं प्रकाशयेत् अन्यस्य हृदयमज्ञात्वा स्वानुरागप्रकाशनस्य लज्जादिहेतुत्वादिति भावः । द्रढीकर्तुं पुनरपि पृच्छति--**किमिति** ॥ छन्देनाभिप्रायेण । **नहीति** ॥ आत्मन इत्याद्यनुषङ्गः । **बिम्बान्तरितानि** मन्मुखसंक्रान्तानि । इत्थं तद्वचनेन राज्ञः स्वस्मिन्ननुरागे दृढप्रत्यया मदनविवशा राजोपसर्पणादिना स्वानुरागप्रकाशनं कर्तुकामापि देवीं विचिन्त्य तद्भयेनाह--**हलेत्यादि** ॥ **देवीं चिन्तयित्वेति** ॥ तद्भयेनेति भावः । **हृदयस्य न प्रभविष्यामीति** ॥ हृदयस्य स्वैरप्रवृत्तिमनुवदितुं न शक्ष्यामीत्यर्थः । समुचितदृष्टान्तोपन्यासपूर्वकं तच्छङ्कामपनुदति--**मुग्ध इत्यादि** ॥ मुग्धे मूढे । तव मौढ्यमेवैवं शङ्कायां हेतुरिति भावः । भ्रमरसंपातो भविष्यतीत्याद्यप्रस्तुतप्रशंसा । यथा चूतप्रसवमवतंसयितुकामो भ्रमरसंपातं न गणयति तथा राजसमागमकामा त्वं देवीं मा गणयेति भावः ॥ पुनरपि साध्वसेनाह--**त्वमिति** ॥ दुर्जाते व्यसने सति । सङ्कटावस्थायां सत्यामित्यर्थः । भवेति प्रार्थना । अनेन वचनेन त्वन्नियोगमहं विधास्यामीति द्योत्यते । स्वनियोगे त्वां स्थिरीकर्तुमात्मप्रशंसां कुर्वन्त्याह-- **विमर्देति** ॥ बकुलावलिका बकुलपुष्पमाला

---

१. वत्तंदरिदाइं २. वक्त्रान्तरितानि ३. हिअअं विस्ससिदि ४. हृदयं विश्वसिति.

**राजा**—साधु बकुलावलिके, साधु ।

भावज्ञानानन्तरं प्रस्तुतेन
प्रत्याख्याने दत्तयुक्तोत्तरेण ।
वाक्येनेयं स्थापिता स्वे निदेशे
स्थाने प्राणाः कामिनां दूत्यधीनाः ॥ १४ ॥

**इरावती**—हञ्जे पेक्ख पेक्ख । [1]कारिदा एव्व एदस्सिं बउलावलिआए पदं मालविआ ।

हञ्जे पश्य पश्य । [2]कारितैवैतस्मिन् बकुलावलिका पदं मालविका ।

**निपुणिका**—भट्टिणि, णिव्विआरस्स [3]वि ऊसुअदाजणओ उवदेसो ।

भट्टिनि, निर्वि[4]कारस्याप्युत्सुकताजनक उपदेशः ।

**इरावती**—ठाणे खु संकिदं मे हिअअं । गहीदत्था अणन्तरं चिन्तइस्सं ।

स्थाने खलु शङ्कितं मे हृदयम् । गृहीतार्थानन्तरं चिन्तयिष्यामि ।

---

तन्नामिका च । यथा बकुलपुष्पमालायाः विमर्दे सति सौरभ्यमधिकं प्रकाशते तथा दुर्जाते सति बकुलावलिकाया मम चातुर्यं प्रकाशीभविष्यतीत्यर्थः । अत्र रूपकमलङ्कारः । सर्वथा भर्तुरङ्कपरिवर्तिनीत्यादिकमेतदन्तं बकुलावलीमालविकयोर्वचनामृतमापीय परमसंतुष्टो बकुलावलीं प्रशंसन्नाह—**साध्वित्यादि** ॥ **भावेति** ॥ **भावज्ञानानन्तरं** 'हला अवचनीयं मन्त्रयसे' इत्यादिवचनादिना मालविकाया अभिप्रायं ज्ञात्वा, **प्रस्तुतेन** 'गुणेष्वभिनिवेशिन' इत्यादिना वक्तुमुपक्रान्तेन **प्रत्याख्याने** 'अलीकं मन्त्रयसे एतदेव मयि नास्ति' इत्यादिना मालविकया निरसने कृते, अनुरागोऽनुरागेणेति भर्तुः खल्वेतानि प्रणयमृदुकानीति च दत्तं युक्तमुचितमुत्तरं यत्र तेन **वाक्येन** वाक्यसमुदायेन करणेन त्वया इयं स्वे निदेशे स्थापिता स्थिरीकृता । त्वया नियुज्यमानं मत्समागमं कर्तुं व्यवसिता कृतेत्यर्थः । अत इत्यर्थात् । कामिनां प्राणाः प्राणनोपायः प्राणत्वेन प्रियाया अध्यवसायो वा । दूत्यधीनाः इति यत् तत् स्थाने युक्तम् । अत्र प्रकृतेन विशेषेण सामान्यस्य समर्थनादर्थान्तरन्यासः । हर्षादयो भावाः । शालिनी वृत्तम् । पुनरपि सेर्ष्यमाह— **हञ्जे इति** ॥ एतस्मिन् भर्तृसमागमे पदं व्यवसायम् । पदं व्यवसितीत्याद्यमरः । तदनुवदति—**भट्टिनीति** ॥ **निर्विका-**

---

१. कारिदं एव्व बउलावलिआए एदं पदं मालविआए २. कारितमेव बकुलावलिकयैतत्पदं मालविकायाः ३. अहिआरस्स उइदो उवदेसो ४. अधिकारस्योचित उपदेशः

**बकुलावलिका**—एसो दुदीओ वि दे णिव्वुत्तपरिकम्मा चलणो । [1]जाव दुवे वि सणूउरे करेमि । (इति नाट्येन नूपुरयुगलमामुच्य) हला, उट्ठेहि । अणुचिट्ठ देवीए असोअविआसइत्तअं णिओअं ।

**एष द्वितीयोऽपि ते निर्वृत्तपरिकर्मा चरणः । [2]यावत् द्वावपि सनूपुरौ करोमि । हला, उत्तिष्ठ । अनुतिष्ठ देव्या अशोकविकासयितृकं नियोगम् ।**

(उभे उत्तिष्ठतः ।)

**इरावती**—[3]सुदं देवीए णिओओत्ति । होदु दाणिं ।

**[4]श्रुतं देव्या नियोग इति । भवत्विदानीम् ।**

**बकुलावलिका**—एसो उवारूढराओ उवभोअक्खमो पुरदो दे [5]वट्टइ ।

**एष उपारूढराग उपभोगक्षमः पुरतस्ते [6]वर्तते ।**

**मालविका**—(सहर्षम्) किं भट्टा । किं भर्ता ।

**बकुलावलिका**—(सस्मितम्) ण दाव भट्टा । एसो असोअसाहावलम्बी पल्लवगुच्छो । ओदंसेहि दाव णं ।

**न तावद्भर्ता । एषोऽशोकशाखावलम्बी पल्लवगुच्छः । अवतंसय तावदेनम् ।**

**विदूषकः**—[7]सुदं भवदा । [8]श्रुतं भवता ।

---

**रस्यापि** मदनविकारशून्यस्यापि । किमुतान्यस्येत्यपिशब्दार्थः । उत्सुकता तात्पर्यं कर्तव्यव्यवसाय इति यावत् । **स्थान इति** ॥ **गृहीतार्था** अवगतसर्वविषया । चिन्तयिष्यामि कर्तव्यमिति शेषः । **एष इत्यादि** ॥ स्पष्टम् । **श्रुतमिति** ॥ देव्या नियोग इति श्रुतं किमित्यर्थः । अनेन धारिण्यप्यस्मिन्कर्मणि किमनुकूलेति इरावत्याः शङ्का गम्यते । **भवत्विदानीमिति** ॥ इदमद्यास्तामित्यर्थः । भवत्विदानीमितीरावतीवाक्यं वा । द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्त्वित्यादिकामशास्त्रानुरोधेन राजसंनिधानं सूचयन्त्याह—**एष इत्यादि** ॥ एषः अशोकपल्लवगुच्छः राजा च । रागः रक्तिमा अनुरागश्च । उपभोगेति पुरतस्ते वर्तत इति चोभयसाधारणम् । हर्षौत्सुक्यपरवशा पृच्छति—**किं भर्तेति** ॥ **अवतंसय तावदेनमिति** ॥ अवतंसय कर्णभूषणं कुरु, सबहुमानं स्वीकुरुष्व च । एनं गुच्छं राजानं च । पताकास्थानकमिदम् ।

---

१. जाव णं सणूउरं करेमि २. यावदेनं सनूपुरं करोमि ३. सुदो देवीए णिओओ । होदु दाणिं; अवि सुदं—; **निपुणिका**—सुदं देवीए णिओओत्ति दाणिं ४. श्रुतो देव्या नियोगः । भवत्विदानीम्; अपि श्रुतं—; **निपुणिका**—श्रुतं देव्या नियोग इतीदानीम् ५. देसइ ६. दृश्यते ७. अवि सुदं ८. अपि श्रुतं.

राजा—सखे, पर्याप्तमेतावता कामिनाम्।

अनातुरोत्कण्ठितयोः प्रसिध्यता
समागमेनापि रतिर्न मां प्रति।
परस्परप्राप्तिनिराशयोर्वरं
शरीरनाशोऽपि समानुरागयोः ॥ १५ ॥

(मालविका रचितपल्लवावतंसा सलीलमशोकाय पादं प्रहिणोति।)

राजा—सखे[1],

आदाय कर्णकिसलयमस्मादियमत्र चरणमर्पयति।
उभयोः सदृशविनिमयादात्मानं वञ्चितं मन्ये ॥ १६ ॥

मालविका[2]—वामो क्खु एसो असोओ जो ण्वअं पमाणीकदुअ कुसुमुग्गमं ण दंसेदि। अवि णाम अम्हाणं सम्भावणा सफला हुवे।

वामः खल्वेषोऽशोको यो ण्वञ्जकं प्रमाणीकृत्य कुसुमोद्गमं न दर्शयति। अपि नामावयोः संभावना सफला भवेत्।

बकुलावलिका—हला, णत्थि दे दोसो। णिग्गुणो अअं असोओ जइ कुसुमोब्भेदमन्थरो हवे, जो ईरिसं चलणसक्कारं लम्भिअ[3]।

श्रुतमित्यत्र कर्त्का प्रश्नः। अपि श्रुतमिति च पाठः। संतुष्टि सामान्येन ह—सख इति। एतावता अनुरागप्रकाशकवचनश्रवणमात्रेण कामिनां पर्याप्तं संतुष्टिः अस्ति। उक्तमुपपादयति—अनातुरेति॥ अनातुरः एकः कामव्यथाशून्यः उत्कण्ठितः अपरः पर्युत्सुकश्च तयोः। अपरक्तानुरक्तयोरिति यावत। जनयोः प्रसिध्यता सिद्धिं प्राप्नुवता समागमेनापि मां प्रति रतिर्न कामिनो मम प्रीतिर्नास्ति। किंतु परस्परप्राप्तिनिराशयोः परस्परसङ्गमे महाप्रतिबन्धकसत्त्वादाशारहितयोः समानुरागयोः शरीरनाशोऽपि। उभयत्रापिशब्दो विरोधे। भवति यत्तत् वरं मम मनाक् प्रियम्। यथा शाकुन्तले कामं प्रियेत्यादि। अत्र पूर्वार्धे विशेषोक्तिः। उत्तरार्धे विभावना च। वंशस्थं वृत्तम्। मालविकायाः प्रवृत्तिं पश्यन्नाह—सख इति॥ आदायेति॥ इयमस्मादशोकात् कर्णकिसलयं कर्णपूरार्थं पल्लवमादाय। अत्र अशोके। उभयोः अस्य अशोकस्य च। सदृशो यो विनिमयः किसलयादानपूर्वकचरणार्पणरूपा परिवृत्तिः। सदृशयोर्विनिमय इति वा। तस्माद्धेतोः। तं वीक्ष्येति ल्यब्लोपे पञ्चमी वा। अहमात्मानं मां वञ्चितं दैववञ्चितं मन्ये। अस्या मम चैतादृशविनिमयस्यालाभात् भाग्यहीनं जानामीत्यर्थः। यथा शाकुन्तले—वयं तत्त्वान्वेषादित्यादि। अत्र विषादः औत्सुक्यं च। पूर्वार्धे परिवृत्तिरलङ्कारः। आर्या वृत्तम्। मालविकामा-

१. वयस्य पश्य २. एतन्मालविकावचनं बहुषु पुस्तकेषु नास्ति ३. लंभओ; लहेइ.

हला, नास्ति ते दोषः । निर्गुणोऽयमशोको यदि कुसुमोद्भेदमन्थरो भवेद्य ईदृशं चरणसत्कारं लब्ध्वा[1] ।

**राजा**—

> अनेन तनुमध्यया मुखरनूपुराराविणा
> नवाम्बुरुहकोमलेन चरणेन संभावितः ।
> अशोक यदि सद्य एव मुकुलैर्[2]न संपत्स्यसे
> वृथा वहसि दोहदं ललितकामिसाधारणम् ॥ १७ ॥

सखे, वचनावसरपूर्वकं[3] प्रवेष्टुमिच्छामि ।

**विदूषकः**—एहि णं परिहासइस्सं । एह्येनां परिहासयिष्यामि ।

(उभौ प्रवेशं कुरुतः ।)

**निपुणिका**—भट्टिणि, भट्टा एत्थ एव्व पविसदि ।

भट्टिनि, भर्तात्रैव प्रविशति ।

---

श्वासयितुमाह—**हलेति** ॥ **नास्ति ते दोषः** । तवात्र दोषो नास्ति । किन्त्वयमशोकः निर्गुणः स्यादिति शेषः । अशोकस्य निर्गुणतैव प्रकटिता स्यादित्यर्थः । कुत इत्यत्राह—**यदीति** ॥ यः अशोकः ईदृशं लोकोत्तरं दुर्लभं च चरणसत्कारं त्वदीयचरणार्पणरूपं संमानं लब्ध्वा । लम्भित इति च पाठः । कुसुमोद्भेदे मन्थरः चिरायमाणः भवेद्यदि तदेति शेषः । उक्तयोर्वाक्ययो राजविषयकप्रार्थनापि सफला भवेदित्यर्थः । यदि राजा प्रार्थनाविमुखो भवेत्तदा निर्गुणः स्यादित्यर्थश्च ध्वन्यते । तदुक्तमनुसरन्नशोकं प्रत्याह—**अनेनेति** ॥ **तनुमध्यया** कृशोदर्यानया । मुखरः शब्दायमानो यो नूपुरः तेन हेतुना आराविणा । यद्वा नूपुरस्याारावोऽत्रास्ति तेन । नवेन सद्यो विकसितेनाम्बुरुहेणेव कोमलेन । विशेषणाभ्यां चरणस्य संभावनक्रियाकरणत्वयोग्यता दर्शिता । अनेन चरणेन वामपादेन संभावितः स्पर्शेन सत्कृतः त्वं सद्य एव मुकुलैः न संपत्स्यसे न संपत्तिमान्भविष्यसि यदि । चरणसंभावनफलभूता मुकुलरूपसंपत्तिस्तव न भविष्यति यदीत्यर्थः । तदा हे अशोक त्वं ललितः विलासी धीरललितो वा यः कामी तस्य साधारणं समानमित्यनेन दोहदस्यान्यदुर्लभत्वस्पृहणीयत्वादिकं द्योत्यते । **दोहदं** सुन्दरीपादार्पणपात्रीभवनरूपं **वृथा वहसि** तद्वहनं वृथा स्यादित्यर्थः । तस्य वैयर्थ्ये तव तद्दुर्लभं भवेत् तेन त्वामिदानीमशोकोऽपि सशोको भविष्यसीति च संबुद्ध्या सूच्यते । ललितेत्यादिना स्वस्य तल्लाभौत्सुक्यं च । अत्र परिकरालङ्कारः । पृथ्वी वृत्तम् । अथौत्सुक्यातिशयेनाह—**सख इति** ॥ **वचनावसरपूर्वकं** यत्किंचिद्वचनस्यावसरं संपाद्य । नर्मसचिवो निरूप्याह—**एहीति** । **भट्टिनीत्यादि** ॥ स्पष्टम् । मालविकामुपसृत्य नर्मवचनमाह—

---

१. लम्भितः; लभते २. कुसुमैः ३. वचनानुसरणपूर्वकं.

**इरावती**—एव्वं पुढमं मम चिन्तिदं हिअएग ।

एवं प्रथमं मम चिन्तितं हृदयेन ।

**विदूषकः**—(उपसृत्य) होदि ण[1] जुत्तं णाम अत्तहोदो पिअवअस्सो अअ अंसोओ वामपादेण ताडिदुं ।

भवति, न[2] युक्तं नाम अत्रभवतः प्रियवयस्योऽयमशोको वामपादेन ताडयितुम् ।

**उभे**—(ससंभ्रमम् ) अम्हो, भट्टा । अहो, भर्ता ।

**विदूषकः**— बउलावलिए, गहीदत्थाए तुए अत्तहोदी ईरिसं अविणअं करन्ती कीस ण णिवारिदा ?

बकुलावलिके, गृहीतार्थया त्वयात्रभवतीदृशमविनयं कुर्वती कस्मान्न निवारिता ।

(मालविका भयं रूपयति ।)

**निपुणिका**—भट्टिणि, पेक्ख । किं पउत्तं अज्जगोदमेण ।

भट्टिनि, पश्य । किं प्रवृत्तमार्यगौतमेन ।

**इरावती**—कहं बह्मबन्धू अण्णहा जीविस्सदि ।

कथं ब्रह्मबन्धुरन्यथा जीविष्यति ।

**बकुलावलिका**—अज्ज एसा देवीए णिओअं अणुचिट्ठदि । एदस्सिं अदिक्कमे परवदी इअं । पसीददु भट्टा ।

आर्य, एषा देव्या नियोगमनुतिष्ठति । एतस्मिन्नतिक्रमे परवतीयम् । प्रसीदतु भर्ता ।

(आत्मना सममेनां प्रणिपातयति ।)

**राजा**—यद्येवमनपराधासि । उत्तिष्ठ भद्रे ।

(हस्ते गृहीत्वैनामुत्थापयति ।)

---

**भवतीति** ॥ **न युक्तं नाम** युक्तं नैव । युक्तं नामेति पाठे युक्तं किमित्यर्थः । **प्रियवयस्यः** स्नेहपात्रभूतः । त्वत्पादार्पणापेक्षत्वादिसाधर्म्येण प्रियवयस्यतुल्य इति च गूढार्थः । अनेन ताडनानर्हत्वं द्योत्यते । **बकुलावलिक इति** ॥ **गृहीतार्थया** अस्य प्रियवयस्यत्वादिकं गृहीतवत्या । नर्मसचिववचनस्य राज्ञा सह मालविकासंयोजनार्थतामवगम्य सेर्ष्यमाह— **भट्टिनीति** ॥ तदुक्त्यनुसारेण सेर्ष्यमधिक्षिपन्त्याह— **कथमिति** ॥ **ब्रह्मबन्धुः** क्षुद्रब्राह्मणः । **अन्यथा** एवंविधदुराचारे राज्ञः साहाय्याकरणे कथं **जीविष्यति** जीवनं करिष्यति । बकुलावलिका विदूषकं

---

१. णेति असोओ इति च नास्ति २. नेति अशोक इति च नास्ति.

**विदूषकः**—जुज्जइ। देवी एत्थ माणइदव्वा।

युज्यते। देव्यत्र मानयितव्या।

**राजा**—

किसलयमृदोर्विलासिनि कठिने निहितस्य पादपस्कन्धे।
चरणस्य न ते बाधा संप्रति वामोरु वामस्य॥ १८॥

(मालविका लज्जां रूपयति।)

**इरावती**—अहो [1]णवणीदकप्पहिअओ अज्जउत्तो।

अहो नवनीतकल्पहृदय आर्यपुत्रः।

**मालविका**—बउलावलिए, एहि। अणुट्ठिदं अत्तणो णिओअं देवीए णिवेदेह्म।

बकुलावलिके, एहि। अनुष्ठितमात्मनो नियोगं देव्यै निवेदयावः।

**बकुलावलिका**—तेण हि विण्णावेहि भट्टारं विसज्जेहित्ति।

तेन हि विज्ञापय भर्तारं विसर्जयेति।

**राजा**—भद्रे, यास्यसि। मम ताव[3]दुत्पन्नावसरमर्थित्वं श्रूयताम्।

**बकुलावलिका**—अवहिदा सुणाहि। आणवेदु भट्टा।

अवहिता शृणु। आज्ञापयतु भर्ता।

---

प्रति भङ्ग्याह—**आर्येति**॥ शेषं स्पष्टम्। हस्ते गृहीत्वा मालविकामावर्जयितुमाह—**किसलयेति**॥ 'यानस्थानासनादीनां मुखनेत्रादिकर्मणाम्। विशेषस्तु विलासः स्यादिष्टसंदर्शनादिना॥' इति लक्षितं रागानुभावं विलासमवलोक्य सहर्षमाह—**विलासिनीति**॥ वामौ सुन्दरावूरू यस्या इति सौन्दर्यप्रशंसा। किसलयमृदोः कठिने इत्याभ्यां द्वयोरननुरूपत्वद्योतकाभ्यां बाधायाः संभावना द्योत्यते। **वामस्य** सव्यस्य अथ च सुन्दरस्य। संप्रति बाधा नेति काक्वा प्रश्नः। तेन चरणसंवाहनादिकं किं मयानुष्ठेयमिति द्योत्यते। वामोरु इत्यनेन ऊरुबाधासंभावना च। तेन तत्संवाहनौत्सुक्यं च। अलोपमा परिकरश्च। पूर्वार्धे विषमालङ्कारश्च। प्रियोक्त्या संग्रहो नाम संध्यङ्गम्। आर्या वृत्तम्। तच्छ्रुत्वाह—**अहो इति**॥ **नवनीतकल्पहृदय इति**॥ यथा नवनीतमग्नितापेन द्रवति तथा परतापेनास्य हृदयमित्युपालम्भोक्तिः। लज्जादिना तत्र स्थातुमपारयन्त्याह—**बकुलावलिक इति**॥ **तेन हीति**॥ इति विज्ञापयेति संबन्धः। **भद्र इति**॥ **यास्यसि** इतो गमिष्यसि। कदेत्यत्राह—**ममेति**॥ **उत्पन्नावसरं** प्राप्तकालम्। **अर्थित्वं**

---

१. अविणीदहिअओ खु अज्जउत्तो २. अविनीतहृदयः खल्वार्यपुत्रः ३. दुपपन्ना.

**राजा—**

**धृतिपुष्पमयमपि जनो बध्नाति न तादृशं चिरात्प्रभृति।**
**स्पर्शामृतेन पूरय दोहदमस्याप्यनन्यरुचेः ॥ १९ ॥**

**इरावती—**(सहसोपसृत्य) पूरेहि पूरेहि। असोओ कुसुमं ण[1] दंसेदि। अअं[2] उण पुप्फइ फलइ अ।

पूरय पूरय। अशोकः कुसुमं न[3] दर्शयति। अयं[4] पुनः पुष्प्यति फलति च।

(सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः।)

**राजा—**(अपवार्य) वयस्य, का प्रतिपत्तिरत्र।

**विदूषकः—**किं अण्णं। जङ्घाबलं[5] एव्व।

किमन्यत्। जङ्घाबलमेव[6]।

**इरावती—**बउलावलिए, साहु तुए उवक्कन्दं। मालविए तुमं दाव करेहि सफलपत्थणं अज्जउत्तं।

---

प्रार्थना। **श्रूयतामिति** ॥ ततो गमिष्यसीति भावः। तच्छ्रवणतात्पर्यं बोधयितुमवहिता शृणोमीति मालविकामुक्त्वा राजानमाह— **आज्ञेति** ॥ किमर्थित्वमित्यत्राह— **धृतीति** ॥ **अयं जनोऽपि** अशोक इवाहमपि **चिरात्प्रभृति** बहुकालादारभ्य **तादृशं** त्वद्दर्शनपूर्वकालिकतुल्यं यद्वा तत्तुल्यं, लोकोत्तरमित्यर्थः। **धृतिपुष्पं** संतुष्टिरूपं पुष्पं **न बध्नाति** न धत्ते। त्वया दोहदस्यापूरणादिति भावः। तमेव हेतुं द्योतयन् कर्तव्यमाह—**स्पर्शेति** ॥ **स्पर्शामृतेन** अमृततुल्येन स्पर्शेन। स्पृष्टकालिङ्गनेनेति यावत्। नास्त्यन्यस्मिञ्जने रुचिर्यस्य तस्येत्यनेन दोहदपूरणस्यानन्यनिर्वाह्यत्वं द्योत्यते। **अस्यापि** अशोकस्येव ममापि **दोहदं** धृतिपुष्पोत्पादकं कर्म **पूरय** सफलयेति प्रार्थनायां लोट्। अत्र रूपकमुपमा च। आर्या वृत्तम्। इरावती तदाकर्ण्यात्यन्तमसहमाना सहसोपसृत्य मालविकामाह— **पूरयेत्यादि** ॥ ईर्ष्याहेतुकावेगद्योतिका द्विरुक्तिः। **अयं** भर्ता। पुनश्शब्दो विशेषे। तमाह—**पुष्प्यतीति** ॥ पुष्प विकसन इति दिवादौ पठितो धातुः। न केवलं पुष्पं, फलं च दर्शयिष्यत्येवेत्यर्थः। अत्र पुष्पत्वादिना धृत्यादेरध्यवसायादतिशयोक्तिः। अयं तुष्यति तव तत्फलं च भविष्यतीति भावः। अत्र संरब्धवचनात् त्रोटकं नाम संध्यङ्गम्। **संभ्रान्ताः** भीताः। **प्रतिपत्तिः** उपायः। सपरिहासमाह— **जङ्घाबलमेवेति** ॥ धावनमेवेत्यर्थः। जङ्घावलम्बनमिति पाठेऽस्याः पादवन्दनमित्यर्थः॥ वयस्येत्यादौ भीतेः गम्यमानत्वादुद्वेगो नाम संध्यङ्गम्।

---

१. दंसेदि ण वा। २. अअं उण पुप्फदि एव्व ३. दर्शयति न वा। ४. अयं पुनः पुष्प्यत्येव ५. जङ्घावलंबणं एव्व ६. जङ्घावलम्बनमेव.

बकुलावलिके, साधु त्वयोपक्रान्तम्। मालविके त्वं तावत्कुरु सफलप्रार्थनमार्यपुत्रम्।

उभे—पसीददु भट्टिणी। का वअं भट्टिणो पणअपरिग्गहस्स।

प्रसीदतु भट्टिनी। का वयं भर्तुः प्रणयपरिग्रहस्य।

(इति निष्क्रान्ते।)

इरावती—अहो अविस्ससणीआ पुरिसा। मए खु अत्तणो वञ्चणा वाहजणगीदिरत्ताए हरिणीए विअ असंकिदाए ण विण्णादा।

अहो अविश्वसनीयाः पुरुषाः। मया खल्वात्मनो वञ्चना व्याधजनगीतिरक्तया हरिण्येवाशङ्कितया न विज्ञाता।

विदूषकः—(जनान्तिकम्।) भो पडिवज्जेहि किंवि उत्तरं। कम्मगहीदेण वि कुम्भीलएण संधिच्छेअणे सिक्खिदोम्मित्ति वत्तव्वं होदि।

भो प्रतिपद्यस्व किमप्युत्तरम्। कर्मगृहीतेनापि कुम्भीलकेन संधिच्छेदने शिक्षितोऽस्मीति वक्तव्यं भवति।

राजा—सुन्दरि, न मे मालविकया कश्चिदर्थः। मया त्वं चिरयसीति यथाकथंचिदात्मा विनोदितः।

---

सरोषमाह—**बकुलावलिक इत्यादि** ॥ सविनयमाहतुः—**का इति** ॥ वयं काः अयोग्याः असमर्थाश्चेत्यर्थः। **प्रणयपरिग्रहस्य** प्रार्थनास्वीकारस्य तत्सफलीकरणस्येति यावत्। तयोः निष्क्रान्तयोः राजानं सरोषमाह—**अहो इति** ॥ मया खल्वात्मनो वञ्चना न विज्ञातेति संबन्धः। अत्रोपमामाह—**व्याधेत्यादि** ॥ अविज्ञातत्वे हेतुः—**अशङ्कितयेति**। त्वया सह डोलालीलामनुभविष्यामीति इरावत्यै राज्ञा प्रतिज्ञातस्यान्यथाकरणम् अत्र वञ्चना बोध्या। राजा जनान्तिकं पृच्छति—**सख इति** ॥ प्रतिवक्ति—**भो इति** ॥ किमप्युत्तरं प्रतिपद्यस्व प्रयोजय ॥ ननु मत्कर्मण्यनया दृष्टे सति मया किं वक्तव्यमिति शङ्कां परिहर्तुं दृष्टान्तमाह—**कर्मेत्यादि** ॥ कर्मणि चौर्याय गृहभेदनक्रियायां तत्काल इत्यर्थः। गृहीतेनापि कुम्भीलकेन चोरेण पिहितभूमिः संधिः तस्य छेदने भेदने सुरङ्गाकरण इति यावत्। **शिक्षितः** अभ्यासयुक्तः। **अस्मीति वक्तव्यं भवतीति** ॥ नाहं चौर्यकारी किंतु सुरङ्गाकरणस्यायमभ्यासो मया क्रियत इति वक्तव्यमित्यर्थः।

---

१. अत्तणो वञ्चनवअणं पमाणीकरिअ अविक्खत्ताए वाहजणगीदगहीदचित्ताए विअ हरिणीए एदं ण विण्णादं २. आत्मनो वञ्चनवचनं प्रमाणीकृत्याक्षिप्तया व्याधजनगीतगृहीतचित्तयेव हरिण्यैतन्न विज्ञातम् ३. पडिजोएहि किं वि दाणिं। किं अण्णं कम्मगहीदेण कुंभीलएण संधिच्छेअणं— ४. प्रतियोजय किमपीदानीम्। किमन्यत् कर्मगृहीतेन कुम्भीलकेन संधिच्छेदनं— ५. मालविकायां,

**इरावती**---विस्ससणीओसि । मए ण विण्णादं ईरिसं विणोदवत्थुअं अज्जउत्तेण उवलद्धं ति । अण्णहा मन्दभाइणीए एव्वं ण करीअदि ।

विश्वसनीयोऽसि । मया न विज्ञातमीदृशं विनोदवस्तुकमार्यपुत्रेणोपलब्धमिति । अन्यथा मन्दभागिन्यैवं न क्रियते ।

**विदूषकः**—मा दाव तत्तहोदो दक्खिण्णस्स उवरोहं भणदु । समावत्तिदिट्ठेण देवीए परिअणेण संकहावि जइ अवराहो ठाविअदि एत्थ तुमं एव्व पमाणं ।

मा तावत्तत्रभवतो दाक्षिण्यस्योपरोधं भणतु । समापत्तिदृष्टेन देव्याः परिजनेन संकथापि यद्यपराधः स्थाप्यते अत्र त्वमेव प्रमाणम् ।

**इरावती**—णं संकहा णाम होदु । किंति अत्ताणं आआसइस्सं ।

नतु संकथा नाम भवतु । किमित्यात्मानमायासयिष्यामि ।

(इति रुषा प्रस्थिता ।)

**राजा**—(अनुसरन्) प्रसीदतु भवती ।

(इरावती रशनासंदानितचरणा व्रजत्येव ।)

**राजा**—सुन्दरि, न शोभते प्रणयिनि जने निरपेक्षता ।

---

तथा त्वमपि किमपि प्रतिवदेति भावः । राजा निरूप्याह—**सुन्दरीत्यादि** ॥ आवर्जनपरा संबुद्धिः । मालविकया हेतुना अर्थः प्रयोजनम् । तर्हि किमर्थं तया सहैकत्रावस्थानादिकं कृतमित्यत्राह—**त्वमिति** ॥ सोपालम्भमाह —**विश्वसनीय इति** ॥ विश्वसनीय इत्यत्र विपरीतलक्षणा बोध्या । इति न विज्ञातमित्यन्वयः । **अन्यथा** विज्ञाने एवमत्रागमनरूपं **न क्रियते** न क्रियेत । **मा तावदिति** ॥ तत्रभवतो यद्दाक्षिण्यं परिचितजनविषयकं तस्योपरोधं मा भणतु उपरोधवचनं न युक्तम् । **समापत्तिः** यदृच्छा । **संकथापि** आलापोऽपि स्थाप्यते तत्रभवत्येति विपरिणामेनानुषङ्गः । अत्रापराधत्वस्थापने त्वमेव प्रमाणमिति नायमपराध इत्यस्मत्पक्ष इति भावः । तदुक्त्यनुसारेण सरोषमाह—**नन्विति** ॥ संकथा भवतु । इयमिति शेषः । नामेति रोषे कुत्सने वा । धृतिपुष्पामित्यादिमालविकाप्रार्थना किं संकथेति काक्वाऽसूया ध्वन्यते । **रशनेत्यादि** ॥ कविवाक्यम् । 'बद्धे सन्दानितम्' इत्यमरः । मध्यप्रदेशाद्भ्रष्टया काञ्च्या बद्धचरणेत्यर्थः । काञ्चीभ्रंशः कोपानुभावः । राजदर्शनादिजनितकामविकारानुभाव इति केचित् । प्रसादयति—**सुन्दरीति** ॥ **निरपेक्षता** विमुखता । रोषाधिक्येन तर्जयन्त्याह—

**इरावती**—सठ, अविस्ससणीअहिअओसि।

शठ, अविश्वसनीयहृदयोऽसि।

**राजा**—

शठ इति मयि तावदस्तु ते
परिचयवत्यवधीरणा प्रिये।
चरणपतितया न चण्डि तां
विसृजसि मेखलयापि याचिता॥ २०॥

**इरावती**—इअं पि हदासा तुमं एव्व अणुकरेदि[1]।

इयमपि हताशा त्वामेवानुकरोति[2]।

(इति रशनामादाय राजानं ताडयितुमिच्छति।)

**राजा**—इयमिरावती,

बाष्पासारा हेमकाञ्चीगुणेन
श्रोणीबिम्बादभ्यपेक्षाच्युतेन[3]।

**शठेति**॥ 'गूढविप्रियकृच्छठः' इति धनिकः। पुनरप्यावर्जनायाह—**शठेत्यादि**॥ प्रिय इति संबुद्ध्या त्वमेव प्रिया नान्येति द्योत्यते। **मयि तावत्** मयि विषये तु परिचयवती भूयः प्रयोगात्परिचिता। यद्वा परिचयवतीति सप्तम्यन्तं मयीत्यस्य विशेषणं हेतुगर्भम्। अतिपरिचयादवज्ञेति प्रसिद्धम्। शठ इत्यवधीरणा निन्दावाक्। अस्त्वित्यनुमतौ लोट्। मय्यवज्ञा युक्तेति भावः। परंतु हे चण्डि अतिकोपने इति हेतुगर्भम्। त्वं चरणयोः पतितया भ्रष्टया कृतप्रणामया चेति गम्यते। मेखलयापि त्वदेकावलम्बया काञ्च्यापि सख्येति च गम्यते। **याचिता** प्रसादार्थं प्रार्थिता सती **तां** मेखलाविषयामवधीरणां न विसृजसि। किमिदमिति शेषः। इदं न युक्तमिति भावः। केचित्तु मेखलयापि न केवलं मया दुःखदर्शनात्सकरुणया सखीस्थानीयया काञ्च्यापि याचिता सती तां मद्विषयामवधीरणां न विसृजसि तदयुक्तमिति भाव इत्याहुः। अत्र मेखलायां चेतनवृत्तान्तारोपात्समासोक्तिः। अपरवक्त्रं वृत्तम्। तदाकर्ण्य रशनां प्रत्यपि रुषिताह—**इयमिति**॥ **हताशा** दुष्टा **त्वामेवानुकरोति** मदनिष्टजननात् त्वयैव तुल्या। अनुसरतीति च पाठः अतोऽस्यास्त्वयैव सह योगो युक्त इति भावः। **इतीति**॥ इत्युक्त्वेत्यर्थः। **इच्छति** आरभते। **बाष्पेति**॥ बाष्पाण्येवासारो वेगवती वृष्टिर्यस्याः सा। चण्डी एषेरावती श्रोणीबिम्बात् नितम्बमण्डलात् अभ्यपेक्षया मनसोऽनवधानेन हेतुना च्युतेन हेममयेन काञ्चीगुणेन मां मेघराजी विद्युद्दाम्ना वि-

१. अणुसरदि २. अनुसरति ३. प्यु.

चण्डी चण्डं हन्तुमभ्युद्यता मां
विद्युद्दाम्ना मेघराजीव विन्ध्यम् ॥ २१ ॥

**इरावती**—किं मं एव्व भूओ वि अवरद्धं करेसि ।
किं मामेव भूयोऽप्यपराद्धां करोषि ।
(इति रशनां हस्तेनावलम्बते ।)

**राजा**—

अपराधिनि मयि दण्डं संहरसि किमुद्यतं कुटिलकेशि ।
वर्धयसि विलसितं त्वं दासजनायात्र कुप्यसि च ॥ २२ ॥

(आत्मगतम् ) नूनमिदानीमनुज्ञातम् । (इति पादयोः पतति ।)

**इरावती**—ण खु इमे मालविआचलणा, जा दे हरिसदोहलं पूरइस्सन्दि । (इति निष्क्रान्ता सह चेट्या ।)
न खल्विमौ मालविकाचरणौ, यौ ते हर्षदोहदं पूरयिष्यतः ।

**विदूषकः**—उट्ठेहि । किदप्पसादोऽसि ।
उत्तिष्ठ । कृतप्रसादोऽसि ।

**राजा**—(उत्थाय इरावतीमपश्यन् ।) कथं गतैव प्रिया ।

---

न्ध्यमिव चण्डं तीक्ष्णं यथा तथा हन्तुमभ्युद्यतेति संबन्धः । मेघराज्युपमया इरावत्या मालिन्यादिकं विन्ध्योपमया राज्ञः अचलनीयोद्यमत्वादिकं च द्योत्यते । शालिनी वृत्तम् । तद्वचनेनापि कुपिता स्वोद्यमं निह्नुवानाह—**किमिति** ॥ अपराद्धां हन्तुमभ्युद्यतेति वचनेन हननोद्यमरूपापराधयुक्तां किं करोषि त्वत्ताडनाय नोद्युक्तास्मि किंतु रशनावलम्बायेति भावः । रशनासंहरणमवलोक्य पुनरप्यावर्जनायाह—**अपराधिनीति** ॥ हे कुटिलकेशीति सौन्दर्योक्तिः । कौटिल्यं केशस्यैवोचितं न तु तव मनस इति च द्योत्यते । त्वमपराधिनि मयि विषय उद्यतमुन्नमितं दण्डं रशनाप्रहाररूपं किं संहरसि निवर्तयसि । अपराधिनि मयि दण्डस्योचितत्वात्तत्संहरणं न युक्तमित्यर्थः । किंच त्वं विलसितं विलासात्मकश्रृङ्गारचेष्टां वर्धयसि । अत्र वर्तमानाय दासजनाय मह्यं कुप्यसि च । चकारो विरोधं द्योतयन्नद्भुतमुद्भावयति । किमित्यनुषज्यते । अत्र समुच्चयालङ्कारः । आर्या वृत्तम् । स्वयं विचारयति—**नूनमित्यादि** ॥ रशनासंहरेणन मदीयप्रसादनमनयानुज्ञातमिति तर्कयामीत्यर्थः । पादपतनेनाप्यनिवृत्तकोपाह—**नेत्यादि** ॥ अत्र प्रकरणे इरावत्या अधीरनायिकात्वं स्फुटम् । अधीरा परुषाक्षरैरित्यादि तल्लक्षणम् । प्रसादमकृत्वा गतायामिरावत्यामाह—**उत्तिष्ठेति** ॥ कृतप्रसादोऽसि ताडनाद्यकरणात्कृतप्रसादोऽसीति सोपहासोक्तिः । **कथमित्यादि** ॥ कथमिति विषादद्योतकम् । अत्र हर्ष एव कार्य इत्याह—

**विदूषकः**---वअस्स, दिट्ठिआ इमस्स अविणअस्स अप्पसण्णा[1] गदा एसा । दाव वअं सिग्घं ओसराम जाव अङ्गारओ विअ सा अणुवक्कं ण करेदि ।

वयस्य, दिष्ट्या अनेनाविनयेनाप्रसन्ना[2] गतैषा । तावदावां शीघ्रमेवापसरावो यावदङ्गारक इव सानुवक्रं न करोति ।

**राजा**---अहो[3] मनसिजवैषम्यम् ।

मन्ये प्रियाहृतमनास्तस्याः प्रणिपातलङ्घनं सेवाम् ।
एवं[4] हि प्रणयवती सा शक्यमुपेक्षितुं कुपिता ॥ २३ ॥

(इति परिक्रम्य निष्क्रान्ताः सर्वे ।)

इति तृतीयोऽङ्कः ।

---

**दिष्ट्येत्यादि** । दिष्ट्या अनेनाविनयेन अप्रसन्ना गतैषा तावदावां शीघ्रमेवापसरावः यावदङ्गारक इव सा अनुवक्रं न करोतीति पाठः । दिष्ट्येत्यानन्दे । तत्र हेतुः—**गतेति** ॥ गमने हेतुः—**अप्रसन्नेति** ॥ तत्र च—**अनेनाविनयेनेति** ॥ प्रत्यक्षदृष्टेन भवदविनयेनेत्यर्थः । यद्वा इरावत्या अविनयेनेत्यर्थः । अविनयपदेन च विनयविरोधी कोपो विवक्षितः । अङ्गारकः कुजो नाम पापग्रहः स इव सा इरावती यावदनुवक्रं प्रतीपगतिं प्रसादमकृत्वा गमनात्प्रत्यागमनं संभाव्यमिति भावः । न करोति तावदपसराव इति संबन्धः । अङ्गारकस्य लोहितत्वात् स्वतः पापत्वात् वक्रगतावनिष्टकारित्वाच्च तदुपमया कोपोपरक्तत्वपापाचारत्वादिकं द्योत्यते । प्रणिपातेऽपि प्रसादमकृत्वा तद्गमनस्य विदूषकोक्तं प्रकृतानुकूलत्वेन संतोषास्पदत्वं स्वयमपि सविस्मयमाह—**अहो इत्यादि** ॥ वैषम्यमुपपादयति—**मन्य इति** ॥ प्रियया मालविकया आहृतमना इति हेतुगर्भम् । अहं तस्या इरावत्याः तत्कर्तृकं प्रणिपातस्य मत्कर्तृकपादपतनस्य लङ्घनमतिक्रमणं **सेवाम्** अनुकूलाचरणं **मन्ये** जानामि । कुत इत्यत्राह—**एवमिति** ॥ एवं हि प्रणिपातलङ्घनेन हेतुना मयि प्रणयवती । अनेन प्रणिपातलङ्घनाभावे उपेक्षणाशक्यत्वं द्योत्यते । **कुपितेति** ॥ प्रणिपातलङ्घनहेतोरनुवादः । सतीति शेषः । एवं प्रणयवती सा मयीति च पाठः । उपेक्षितुम् । शक्यमिति निपातः शक्येत्यर्थः । यथा शाकुन्तले—शक्यमरविन्दसुरभिरित्यादि । मयि प्रेमवत्यपि सा संप्रति प्रणिपातलङ्घनं निमित्ती-

---

१. ओसारिदा दाव जन्तणा देवेहिं । जाव सिग्घं अवक्कमाम जाव अङ्गारओ विअ रासिं सा अणुवक्कं ण करेदि २. अपसारिता तावद्यन्त्रणा देवैः । यावच्छीघ्रमपक्रमामः । यावदङ्गारक इव राशिं सानुवक्रं न करोति ३. मदनस्य ४. एवं प्रणयवती सा मयि शक्य—

## चतुर्थोऽङ्कः ।

(ततः प्रविशति पर्युत्सुको राजा प्रतीहारी च ।)

**राजा**—(आत्मगतम्)

**तामाश्रित्य श्रुतिपथगतामास्थया[1] लब्धमूलः**
**संप्राप्तायां नयनविषयं रूढरागप्रवालः ।**
**हस्तस्पर्शैर्मुकुलित[3] इव व्यक्तरोमोद्गमत्वा-**
**त्कुर्यात्क्लान्तं[4] मनसिजतरुर्मां रसज्ञं फलस्य ॥ १ ॥**

---

कृत्योपेक्षितुं शक्येत्यर्थः । पूर्वमन्यमनस्कत्वाभावे इरावत्याः प्रणिपातलङ्घनादिकमनिष्टाचरणतया विचारितवानद्य तु इष्टाचरणतया विचारयामीत्यतो मनसिजस्य विपरीततारूपं वैषम्यमहो इति पूर्वापरसंबन्धः । अत्र काव्यलिङ्गम् । आर्या वृत्तम् । अत्र बीजानुसंधानादाक्षेपो नामाङ्गम् । एतदनुसंधानमेवोत्तराङ्कार्थोपयोगित्वाद्बिन्दुरिति चावधेयम् ॥

॥ इति सारार्थदीपिकायां मालविकाग्निमित्रव्याख्यायां तृतीयोऽङ्कः ॥

॥ अथ चतुर्थोऽङ्कः ॥

अथाङ्कमारभमाणो महाकविरङ्कावताराख्येनार्थोपक्षेपकेण नायकप्रवेशमाह— **तत इत्यादि** ॥ **पर्युत्सुकः** मालविकाविरहखिन्नः । **तामिति** ॥ **श्रुतिपथगतां** सादरं श्रुताम् । चित्रदर्शनस्याप्युपलक्षणमिदम् । तां लोकोत्तरसौन्दर्यादिगुणविशिष्टतया अनुभूतां मालविकाम् । **आश्रित्य** आलम्ब्य या आस्था रतेराद्यावस्थारूपं प्रेम तया **लब्धमूलः** आस्थारूपं मूलं लब्धवानित्यर्थः । आशयेति बद्धमूल इति च पाठः । **सामिति** ॥ तस्यामिति विपरिणामेनानुषङ्गः, तृतीयपादे तस्या इति च । **नयनविषयं संप्राप्तायां** नृत्यादिकाले दृष्टायां सत्यां रूढः उद्भिन्नः रागः प्रेमोत्कर्ष एव प्रवालः पल्लवो यस्य सः । हस्तस्पर्शे सति व्यक्ता रोमोद्गमाः पुलका यत्र तत्त्वात् । स्वशरीरस्थपुलकान् स्वीयमनसिजतरौ परिकल्प्येयमुक्तिः । मुकुलित इव स्थित इत्युत्प्रेक्षा । कुसुमित इति च पाठः । मनसिजः कामः संभोगाभिलाषरूप एव तरुः वृक्षः । नानाशाखोपशाखादिविशिष्टो हि वृक्षः । मनसिजोऽपि दर्शनस्पर्शनचुम्बनादिनानाविषयक इत्यतः साधर्म्याद्वृक्षत्वेन रूपणम् । **कान्तं** फलास्वादकामनायुक्तम् । क्लान्तमिति पाठे फलालाभेन व्यथितमित्यर्थः । मां फलं संभोगरूपं सस्यं च **तस्य रसः** आस्वादः तं जानाति अनुभवतीति तथाविधं कुर्यादिति प्रार्थनायां लिङ् । अत्रोत्प्रेक्षासङ्कीर्णं रूपकम् । मूलबन्धपल्लवोद्गमादीनां लोकप्रसिद्धक्रमेणाभिधानाद्रत्नावली चालङ्कारः । औत्सुक्यादयो भावा बहवो व्यज्यन्ते । तदुपस्कृतः पूर्वानुरागविप्रलम्भश्च । अस्यैवास्मिन्नङ्के प्राधान्येन ध्वनिः । अत्र प्रसञ्जितं बीजं प्रकरी-

---

१. आशया २. बद्धमूलः ३. कुसुमित ४. क्लान्तं.

(प्रकाशम्) सखे गौतम ।

**प्रतीहारी**—जेदु[1] जेदु भट्टा । असंणिहिदो गोदमो ।

जयतु जयतु भर्ता । असंनिहितो गौतमः ।

**राजा**—(आत्मगतम्) आः, मालविकावृत्तान्तज्ञानाय मया प्रेषितः ।

(प्रविश्य)

**विदूषकः**—वड्ढदु[2] भवं । वर्धतां भवान् ।

**राजा**—जयसेने, जानीहि तावत्क देवी धारिणी कथं वा सरुजचरणत्वाद्विनोद्यत इति ।

**प्रतीहारी**—जं देवो आणवेदि ।

यद्देव आज्ञापयति । (इति निष्क्रान्ता ।)

**राजा**—गौतम, को वृत्तान्तस्तत्रभवत्यास्ते सख्याः ।

**विदूषकः**—जो बिडालगहीदाए परहुदिआए ।

यो बिडालगृहीतायाः परभृतिकायाः ।

**राजा**—(सविषादम्) कथमिव ।

**विदूषकः**—सा खु तवस्सिणी ताए पिङ्गलच्छीए सारभण्डभूमिगेहे मि[3]च्चुमुहे विअ णिक्खित्ता ।

सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्डभूमिगृहे मृ[4]त्युमुख इव निक्षिप्ता ।

**राजा**—ननु मत्संपर्कमुपलभ्य ।

**विदूषकः**— अह इं । अथ किम् ।

**राजा**—क एवं विमुखोऽस्माकम् येन चण्डीकृता देवी ।

---

स्थाने कृतमिति चानुसंधेयम् । मन्दाक्रान्ता वृत्तम् । प्रेषितमपि नर्मसचिवमाह्वयति— **सख इति** ॥ अनेनोन्मादो गम्यते । तदाकर्ण्य प्रतीहारी समुदाचारपूर्वकं निवेदयति— **जयत्विति** ॥ आ इति स्मरणद्योतकम् । सूचितविदूषकप्रवेशमाह— **प्रविश्येति** ॥ **जयसेन इति** ॥ **विनोद्यते** परिजनैरिति शेषः । इति जानीहीति संबन्धः । अत्र जयसेनाप्रेषणं रहस्यसंभाषणाद्यर्थम् । **य इति** ॥ **यः** यो वृत्तान्त **परभृतिकायाः** कोकिलायाः स इति शेषः । वृत्तान्त इत्याद्यनुषङ्गः । अत्र निदर्शनालङ्कारः । **सेति** ॥ **तपस्विनी** दयनीया । पिङ्गलाक्ष्येति निन्दावचनम् । सारभाण्डानामुत्कृष्टवस्तूनां यद्भूमिगृहं शिलानिर्मितमधोगृहं तस्मिन् ।

---

१. जेदु २. जयतु ३. गुहाए ४. गुहायां.

**विदूषकः**—सुणादु भवं। परिव्वाजिआ[1] मे कहेदि। हिओ किल तत्तहोदी इरावदी रुजाविहत्थचलणं[2] देविं सुहपुच्छिआ आअदा।

श्रृणोतु भवान्। परिव्राजिका मे कथयति[3]—ह्यः किल तत्रभवतीरावती रुजाविहस्तचरणां[4] देवीं सुखपृच्छिकागता।

**राजा**—ततस्ततः।

**विदूषकः**—तदो सा देवीए पुच्छिदा—किंणु[5] ण[6] ओलोइदो वल्लहजणोत्ति। तदो ताए उत्तं—कुदो[7] वा दे उवआरो। जं दे परिअणस्स वल्लहत्तणं जाणन्ती वि पुच्छसित्ति।

ततः सा देव्या पृष्टा—किं नु[8] नावलोकितो[9] वल्लभजन इति। ततस्तयोक्तम्—कुतो[10] वा त उपचारः। यत्ते परिजनस्य वल्लभत्वं जानत्यपि पृच्छसीति।

**राजा**—निर्भेदादृतेऽपि मालविकायामयमुपन्यासः शङ्कयति। ततस्ततः।

**विदूषकः**—तदो ताए अणुबन्धिज्जमाणाए[11] भवदो अविणअं अन्दरेण परिगाहिदत्था किदा देवी।

---

ततो निष्क्रामणस्य दुष्करत्वं द्योतयितुमुपमामाह— **मृत्युमुख इति** ॥ **क इति** ॥ जन इति शेषः। **सुखपृच्छिकेति** ॥ सुखं प्रष्टुमित्यर्थः ॥ **तत इति** ॥ **किंन्विति** ॥ **वल्लभजनः** राजा। त्वया वल्लभः किंनु नावलोकित इति पृष्टेत्यर्थः। **तत इति** ॥ **तया** इरावत्या। **कुतो वेति** ॥ **उपचारः** इदमुपचारवचनं **कुतो वा** असङ्गतमिदानीमित्यर्थः। अत्र हेतुमाह— **यदिति** ॥ मालविकामुद्दिश्य परिजनस्येत्युक्तिः। **वल्लभत्वमिति** ॥ भर्तुरिति शेषः। इति तयोक्तमित्यन्वयः। **निर्भेदादिति** ॥ निर्भेदः स्पष्टीकरणं तस्मादृतेऽपि तं विनापि मालविकाया इत्यनुक्तेऽपीत्यर्थः। **अयमुपन्यासः** परिजनस्येत्यादिवागारम्भः **मालविकायां** विषये। **शङ्कयतीति** ॥ किं मालविका राज्ञो वल्लभेति देव्याः शङ्कां जनयतीत्यर्थः। तस्या एव परिजनमध्ये सौन्दर्यातिशयादिति भावः। **तत इति** ॥ **अनुबध्यमानया** सनिर्बन्धं पृच्छ्यमानया **अविनयं** मालविकास्पर्शनादि **अन्तरेण** विषयीकृत्य

---

१. परिव्वाजिआए मे कहिदं २. रुअक्कन्तचलणं ३. परिव्राजिकया मे कथितं ४. रुजाक्रान्तचरणां ५. किं उण लक्खिदो ६. णेति नास्ति ७. मन्दो वो उवआरो जं परिजणे संकन्तं वल्लहत्तणं ण जाणीअदि ८. किं पुनर्लक्षिता ९. नेति नास्ति १०. मन्दो व उपचारः यत्परिजने संक्रान्तं वल्लभत्वं न ज्ञायते ११. अणुखिज्जमाणा सा.

ततस्तयानुबध्यमानया भवतोऽविनयमन्तरेण परिगृहीतार्थी कृता देवी ।

**राजा**—अहो दीर्घरोषता तत्रभवत्याः । अतः परं कथय ।

**विदूषकः**—किं अदो वरं । मालविआ बउलावलिआ अ णिअलपदीओ अदिट्ठसुज्जपादं पादालवासं णाअकण्णआओ विअ अणुहोन्ति ।

किमतः परम् । मालविका बकुलावलिका च निगलपद्यावदृष्टसूर्यपादं पातालवासं नागकन्यके इवानुभवतः ।

**राजा**—कष्टं कष्टम् ।

> मधुरस्वरा परभृता भ्रमरी च विबुद्धचूतसङ्गिन्यौ ।
> कोटरमकालवृष्ट्या प्रबलपुरोवातया गमिते ॥ २ ॥

वयस्य, अप्यत्र कस्यचिदुपक्रमस्य गतिः स्यात् ।

**विदूषकः**—कहं भविस्सदि । जं सारभाण्डघरए वाउदा माहविआ देवीए संदिट्ठा । मह अङ्गुलीअअमुद्दं अदेक्खिअ ण मोत्तव्वा तुए इअं हदासा मालविआ बउलावलिआ अत्ति ।

कथं भविष्यति । यत्सारभाण्डगृहे व्यापृता माधविका देव्या संदिष्टा—ममाङ्गुलीयकमुद्रामदृष्ट्वा न मोक्तव्या त्वयेयं हताशा मालविका बकुलावलिका चेति ।

**राजा**—(निःश्वस्य । सपरामर्शम्) सखे, किमत्र कर्तव्यम् ।

---

**परिगृहीतार्था** निवेदितवृत्तान्ता । **किमिति** ॥ अदृष्टः सूर्यपादः सूर्यरश्मिः यत्र तम् । **कष्टं कष्टमिति** ॥ दुःखातिशये वीप्सा । **मधुरस्वरेति** ॥ **परभृता** कोकिलवधूः । मधुररवा परभृतिकेति च पाठः । विबुद्धं विकसितम् । प्रबलः पुरोवातः यत्र तया **अकालवृष्ट्या** सहसैव वर्षणेन **कोटरं** निष्कुहम् । अत्र तुल्ययोगिता अप्रस्तुतप्रशंसा च । परभृता मधुकरीत्याभ्यां मालविकाबकुलावल्योः बकुलावलीमालविकयोर्वा, विबुद्धेत्यादिनानुरक्तस्य राज्ञः, कोटरमित्यनेन पातालगृहस्य, अकालेत्यादिपदाभ्यामिरावतीनिपुणिकयोः धारिणीरावत्योर्वा सादृश्येन प्रतीतेः । वृत्तमार्या ॥ **वयस्येति** ॥ अपीति प्रश्ने । स्यादपीत्यन्वयः । **उपक्रमस्य** प्रतिक्रियायाः उपायारम्भस्य वा **गतिः** प्रवेशः । **कथमिति** ॥ उपक्रमस्य गतिरित्यनुषज्यते । **व्यापृता** उद्युक्ता । अधिकारिणीति यावत् । **संदिष्टा** आज्ञापिता ।

---

१. अनुखिद्यमाना सा २. निगळवत्यौ ३. मधुररवा परभृतिका ४. तुए इअं हदासा इति नास्ति ५. त्वयेयं हताशा इति नास्ति.

**विदूषकः**—(विचिन्त्य) अत्थि एत्थ उवाओ । अस्त्यत्रोपायः ।

**राजा**—क इव ।

**विदूषकः**—(सदृष्टिक्षेपम्) को वि अदिट्ठो सुणोदि । कण्णे दे कहेमि । (इत्युपश्लिष्य कर्णे ।) एव्वं विअ ।

कोऽप्यदृष्टः शृणोति । कर्णे ते कथयामि । एवमिव ।

**राजा**—(सहर्षम) साधु । प्रयुज्यतां सिद्धये ।

(प्रविश्य)

**प्रतीहारी**—देव, पवादसअणम्मि देवी णिसण्णा रत्तचन्दणधारिणा परिअणहत्थगदेण चलणेण भअवदीए कहाहिं विणोदिज्जमाणा चिट्ठदि ।

देव, प्रवातशयने देवी निषण्णा रक्तचन्दनधारिणा परिजनहस्तगतेन चरणेन भगवत्या कथाभिर्विनोद्यमाना तिष्ठति ।

**राजा**—अस्मत्प्रवेशयोग्योऽयमवसरः ।

**विदूषकः**— ता गच्छदु भवं । अहं वि देविं पेक्खिदुं अरित्तपाणी भविस्सं ।

तद्गच्छतु भवान् । अहमपि देवीं द्रष्टुमरिक्तपाणिर्भविष्यामि ।

**राजा**—जयसेनायास्तावत्संवेद्य[1] गच्छ ।

**विदूषकः**—तह । (कर्णे ।) भोदि, एव्वं विअ ।

तथा । भवति, एवमिव । (इति निष्क्रान्तः ।)

**राजा**—जयसेने, तेन हि प्रवातशयनमार्गमादेशय ।

---

**कर्णे कथयामीति** ॥ राज्ञः कर्णे विदूषकोक्त उपायः नियमेन मालविकाप्राप्तिहेतुत्वान्नियताप्तिर्नाम चतुर्थ्यवस्था दर्शिता । अत्र पूर्वं प्रकरीस्थानोक्तबीजस्य नियताप्त्या समन्वयादवमर्शो नाम संधिर्दर्शितः । सर्पदंशापदेशेन देव्याः सकाशान्नागमुद्राविधानमिषेणाङ्गुलीयकमादाय मालविकां मोचयिष्यामीति कर्णे कथितमिति स्फुटीभविष्यति । **देवेति** ॥ प्रकृष्टो वातो यत्र तत्स्थानं प्रवातं तत्र यच्छयनं तस्मिन् । **रक्तचन्दनधारिणा** रक्तचन्दनोपालिप्तेन । तद्धि दाहोपशामकं व्रणविरोपकं चेति वैद्यशास्त्रप्रसिद्धम् । चरणेनेति उपलक्षणे तृतीया । **भगवत्या** पण्डितकौशिक्या । **जयसेनायास्तावत्संवेद्येति** ॥ निरूपितमुपायमिति शेषः । यथा पूर्वं मालविकायाः साक्षाद्दर्शने पण्डितकौशिकी सहायीकृता तथात्र

---

१. दस्मद्रहस्यं विदितं कुरु.

**प्रतीहारी**—इदो इदो देवो । इत इतो देवः ।

(ततः प्रविशति शयनस्था देवी परिव्राजिका विभवतश्च परिवारः ।)

**देवी**—भअवदि, रमणिज्जं कहावत्थु । तदो तदो ।

भगवति, रमणीयं कथावस्तु । ततस्ततः ।

**परिव्राजिका**—(सदृष्टिक्षेपम्) अतः परं पुनः कथयिष्यामि । अत्र भवान्विदिशेश्वरः[1] संप्राप्तः ।

**देवी**—अह्मो, भट्टा । अहो, भर्ता । (अभ्युत्थातुमिच्छति ।)

**राजा**—अलमलमुपचारयन्त्रणया ।

अनुचितनूपुरविरहं नार्हसि तपनीयपीठिकालेम्बम्[2] ।
चरणं रुजापरीतं कलभाषिणि मां च पीडयितुम् ॥ ३ ॥

**देवी**—जेदु अज्जउत्तो । जयत्वार्यपुत्रः ।

**परिव्राजिका**—विजयतां देवः ।

**राजा**—(परिव्राजिकां प्रणम्योपविश्य) देवि, अपि सह्या ते वेदना ।

**देवी**—अज्ज अत्थि मे विसेसो । अद्यास्ति मे विशेषः ।

(ततः प्रविशति यज्ञोपवीतसंवीताङ्गुष्ठः[3] संभ्रान्तो विदूषकः ।)

**विदूषकः**—परित्ताअदु परित्ताअदु । सप्पेण[4] मिच्चुणा दट्ठोह्मि ।

---

जयसेनेति बोध्यम् । **विदिशेश्वर इति** ॥ अग्निमित्र इत्यर्थः । ईश्वर इति क्वचित्पाठः । **अलमिति** ॥ उपचाररूपया यन्त्रणया क्लेशकारिणा कर्मणा अलमिति निषेधे । अभ्युत्थानं मास्त्वित्यर्थः । उक्तार्थे हेतुमाह— **अनुचितेति** ॥ हे कलं सुन्दरं भाषत इति तथाभूते । तव वचनरूपेणोपचारेणैव मे प्रीतिरित्यनेन द्योत्यते । अनुचितः अयोग्यः अनभ्यस्तो वा नूपुरविरहो यस्य तम् । तपनीयपीठिकां स्वर्णमयपादपीठमालम्बत इति तथाभूतम् । अनेन नूपुरविरहेऽपि तच्छोभासंपत्तिरस्तीति द्योत्यते । सर्वत्र हेतुमाह— **रुजेति** ॥ रुजया परीतं व्याप्तं चरणं तव पादं मां च पीडयितुं त्वं नार्हसि । तवोत्थाने चरणस्य पीडा भवेत् ततो ममापि । अत आवयोः पीडां मा कुर्वित्यर्थः । नोत्तिष्ठेति भावः । पतिव्रतायास्तव मालविकाबन्धनेन मत्पीडाकरणमनुचितमिति च द्योत्यते । अत्र प्रस्तुतयोश्चरणाग्निमित्रयोः पीडनक्रियाकर्मत्वप्रतिपादनात्तुल्ययोगिता । काव्यलिङ्गं च । आर्या वृत्तम् ॥ **अद्यास्ति मे विशेष इति** ॥ विशेषः व्यत्यासः । **तत इत्यादि** ॥ यज्ञोपवीतेन यज्ञसूत्रेण संवीतः विषवेगप्रतिरोधाय वेष्टितः अङ्गुष्ठो यस्य सः । यज्ञोपवीतबद्धेति च पाठः । अत्र कपटकल्पनाया गम्यमानत्वाच्छलनं नामाङ्गम् ।

---

१. भवानीश्वरः २. लम्ब ३. यज्ञोपवीतबद्धाङ्गुष्ठः ४. सप्पेणह्मि दट्ठो.

परित्रायतां परित्रायताम्। सर्पेण[1] मृत्युना दष्टोऽस्मि।

(सर्वे विषण्णाः।)

**राजा**—कष्टं कष्टम्। क भवान्परिभ्रान्तः।

**विदूषकः**—देविं देक्खिस्सं ति आआरपुप्फग्गहणकालणादो पमदवणं गदोह्मि।

देवीं द्रक्ष्यामीत्याचारपुष्पग्रहणकारणात्प्रमदवनं गतोऽस्मि।

**देवी**—हद्धि हद्धि। णं अहं एव्व बह्मणस्स जीविदसंसआणिमित्तं जादह्मि।

हा धिक् हा धिक्। नन्वहमेव ब्राह्मणस्य जीवितसंशयनिमित्तं जातास्मि।

**विदूषकः**—तहिं असोअत्थवअकालणादो पसारिदे मे हत्थे[2] कोडरणिग्गदेण सप्परूवेण कालेण दट्ठोह्मि। णं एदे दुवे दंसणपदाणि।

तस्मिन्नशोकस्तबककारणात्प्रसारिते मे हस्ते[3] कोटरनिर्गतेन सर्परूपिणा कालेन दष्टोऽस्मि। नन्वेते द्वे दंशपदे।

(इति दंशं दर्शयति।)

**परिव्राजिका**—तेन हि दंशच्छेदः पूर्वकर्मेति श्रूयते। स तावदस्य क्रियताम्।

छेदो दंशस्य दाहो वा क्षतेर्वा रक्तमोक्षणम्[4]।
एतानि दष्टमात्राणामायुष्याः प्रतिपत्तयः ॥ ४ ॥

**राजा**—संप्रति विषवैद्यानां कर्म। जयसेने, क्षिप्रमाहूयतां ध्रुवसिद्धिः।

---

**देवीमिति** ॥ **द्रक्ष्यामीतीति** ॥ इतीति हेतौ। यदाचारार्थं पुष्पग्रहणं तस्मात्कारणात् तद्वचनसमाप्तेः पूर्वमेव व्याकुलाह— **हा धिगिति** ॥ **ब्राह्मणस्येति** ॥ अनेन दयनीयत्वं ध्वन्यते। जीवितापाये स्वस्य पातकातिशयप्राप्तिसंभावनया खेदश्च। **तत्रेति** ॥ **तत्र** प्रमदवने। अशोके यः स्तबकः तत्कारणात् तद्ग्रहणार्थमित्यर्थः। **हस्ते** दक्षिणहस्ते सर्परूपिणा कालेनेत्यपह्नवालङ्कारः। अनेन मरणस्यावश्यंभावो द्योत्यते। **तेन हीति** ॥ **दंशच्छेदः** दंशस्य दष्टवयवस्य छेदः छेदनम्। श्रूयत इत्यनेन सूचितं प्रमाणवचनमाह—**छेद इति** ॥ दाहः वह्न्यादिना दहनम्। क्षतेः व्रणात् रक्तस्य मोक्षणं स्रावणम्। **दष्टमात्राणामिति** ॥ दंशक्षण एवेत्यर्थः। आयुषे हिताः आयुष्याः **प्रतिपत्तयः** प्रवृत्तयः। 'प्रतिपत्तिस्तु गौरवे' इत्यादि केशवः।

---

1. सर्पेणास्मि दष्टः  2. दक्खिणहत्थे  3. दक्षिणहस्ते  4. रक्तमोचनं.

**प्रतीहारी**—जं देवो आणवेदि ।
यद्देव आज्ञापयति । (इति निष्क्रान्ता ।)
**विदूषकः**—अहो, पावेण मिच्चुणा गहीदोह्मि ।
अहो, पापेन मृत्युना गृहीतोऽस्मि ।
**राजा**—मा कातरो भूः । अविषोऽपि कदाचिद्दंशो भवेत् ।
**विदूषकः**—कहं ण भाइस्सं । सिमसिमाअन्ति मे अङ्गाइं ।
कथं न भेष्यामि । सिमसिमायन्ति मेऽङ्गानि ।
(इति विषवेगं रूपयति ।)
**देवी**—हा दंसिदं असुहं विआरेण । हला ओलम्बह णं ।
हा, दर्शितमशुभं विकारेण । हला अवलम्बध्वमेनम् ।
(परिजनः ससंभ्रममवलम्बते ।)
**विदूषकः**—(राजानं विलोक्य) भो, भवदो बाल्लादो वि पिअवअस्सोह्मि । तं विआरिअ अपुत्ताए मे जणणीए जोगक्खेमं वहेहि ।
भो, भवतो बाल्यादपि प्रियवयस्योऽस्मि । तं विचार्यापुत्राया मे जनन्या योगक्षेमं वह ।
**राजा**—मा भैषीः । अचिरात्त्वां विषवैद्यश्चिकित्सते । स्थिरो भव ।
(प्रविश्य)
**जयसेना**—देव, आणाविदो धुवसिद्धी विण्णावेदि । इह एव्व आणीअदु सो गोदमोत्ति ।
देव, आज्ञापितो ध्रुवसिद्धिर्विज्ञापयति । इहैवानीयतां स गौतम इति ।
**राजा**—तेन हि वर्षवरपरिगृहीतमेनं तत्रभवतः सकाशं प्रापय ।
**जयसेना**—तह । तथा ।

---

**संप्रतीति** ॥ ध्रुवसिद्धिरिति विषवैद्यस्य नाम ॥ **अहो इत्यादि** ॥ विदूषकपरिदेवनं धारिण्याः करुणोत्पादनार्थम् । सिमसिमायन्तीति वेदनानुकारः । अनेन संतापः सूच्यते । **विषवेगमिति** ॥ वैवर्ण्यं वेपथुरित्यादि निर्दिष्टम् । हेति खेदे । हीहीति च पाठः । **विकारेण** विषविकारेण **अशुभम्** अमङ्गलम् । मरणमिति यावत् । **दर्शितं** प्रकाशितम् । परिजनानाह—**अवलम्बेति** ॥ **भो इति** ॥ **अपुत्रायाः** मद्व्यतिरिक्तपुत्ररहितायाः । **वर्षवरेति** ॥ वर्षवरः षण्डः । अन्तःपुरजनान्तरोपलक्ष-

---

१. हीही २. अवलम्बह बह्मणं ३. अवलम्बध्वं ब्राह्मणं ४. परिव्राजिका ५. प्रतिगृहीतमेनं.

**विदूषकः**—(देवीं विलोक्य) भोदि, जीवेअं वा ण वा । जं मए अत्तभवन्दं सेवमाणेण दे अवरद्धं तं मरिसेहि ।

भवति, जीवेयं वा न वा । यन्मयात्रभवन्तं सेवमानेन तेऽपराद्धं तन्मृष्यस्व ।

**देवी**—दीहाऊ होहि । दीर्घायुर्भव ।

(निष्क्रान्तो विदूषकः प्रतीहारी च ।)

**राजा**—प्रकृतिभीरुस्तपस्वी ध्रुवसिद्धिमपि यथार्थनामानं सिद्धिमन्तं न मन्यते[1] ।

(प्रविश्य)

**जयसेना**—जेदु भट्टा । धुवसिद्धी विण्णवेदि । उदकुम्भाविहाणेण सप्पमुद्दिअं किंवि कप्पिदव्वं । तं अण्णेसीअदुत्ति ।

जयतु भर्ता । ध्रुवसिद्धिर्विज्ञापयति—उदकुम्भविधानेन सर्पमुद्रितं किमपि कल्पयितव्यम् । तदन्विष्यतामिति ।

**देवी**—इदं सप्पमुद्दिअं अङ्गुलीअअं । पच्छा मम हत्थे देहि णं ।

इदं सर्पमुद्रितमङ्गुलीयकम् । पश्चान्मम हस्ते देह्येतत् ।

(इत्यङ्गुलीयकं ददाति । प्रतीहारी नाट्येन गृह्णाति ।)

**राजा**—जयसेने, कर्मसिद्धावाशु मां प्रतिपत्तिं[2] नय ।

**जयसेना**—जं देवो आणवेदि ।

यद्देव आज्ञापयति । (इति निष्क्रान्ता ।)

**परिव्राजिका**—देव यथा मे हृदयमाचष्टे तथा निर्विषो गौतमः ।

**राजा**—भूयादेवम् ।

---

णमिदम् । **तत्रभवतो** ध्रुवसिद्धेः । **भवतीति** भवति पूज्ये । **प्रकृतीति** ॥ प्रकृत्या स्वभावेनैव भीरुः । किं पुनः भयकारणे जात इति भावः । **तपस्वी** दीनः । अयमिति शेषः । **ध्रुवसिद्धिमपीति** । उत्कर्षद्योतकोऽपिशब्दः । उत्कर्षहेतुमाह—**यथार्थनामानमिति** ॥ सिद्धिमन्तं न मन्यते न विश्वसिति । ध्रुवसिद्धेरपि यथार्थनाम्नः सिद्धिं मन्य इति पाठे तु अहं तु सिद्धिं विषप्रतिक्रियासिद्धिं **मन्ये** निश्चिनोमि ममात्र न भयमिति भावः । **जयत्विति** ॥ उदकुम्भविधानं नाम कर्मविशेषः विषहरणार्थो भैरवितन्त्रे प्रतिपादितः । **सर्पमुद्रितं** सर्पेण चिह्नितं **किमपि** अङ्गुलीयकमन्यद्वा **कल्पयितव्यं** कर्तव्यम् । तत् सर्पमुद्रितम् **अन्विष्यताम्** अन्विष्यानीयताम् । **इदमिति** ॥ **पश्चादिति** ॥ उदकुम्भविधाना-

---

१. ध्रुवसिद्धेरपि यथार्थनाम्नः सिद्धिं मन्ये २. प्रतिपत्तिमानय.

(प्रविश्य)

जयसेना— देव णिवुत्तविसवेगो गोदमो मुहुत्तेण पकिदित्थो संवुत्तो ।

देव निवृत्तविषवेगो गौतमो मुहूर्तेन प्रकृतिस्थः संवृत्तः ।

देवी—दिट्ठिआ वअणीआदो मुत्तह्मि ।

दिष्ट्या वचनीयान्मुक्तास्मि ।

जयसेना—एसो उण अमच्चो वाहतओ विण्णावेदि । राअकज्जं बहु मन्तिदव्वं । दंसणेण अणुग्गहं इच्छामि त्ति ।

एष पुनरमात्यो वाहतवो विज्ञापयति । राजकार्यं बहु मन्त्रयितव्यम् । दर्शनेनानुग्रहमिच्छामीति ।

देवी—गच्छदु अज्जउत्तो कज्जसिद्धीए ।

गच्छत्वार्यपुत्रः कार्यसिद्धये ।

राजा—(उत्थाय) देवि, आतपाक्रान्तोऽयमुद्देशः । शीतक्रिया चास्य[१] प्रशस्ता । तदन्यत्र नीयतां शयनम् ।

देवी—बालिआओ, अज्जउत्तवअणं अणुचिट्ठह ।

बालिकाः, आर्यपुत्रवचनमनुतिष्ठत ।

परिजनः—तह । तथा

(निष्क्रान्ता देवी परिव्राजिका परिजनश्च ।)

राजा—जयसेने, गूढपथेन मां प्रमदवनं प्रापय ।

जयसेना—इदो इदो देवो । इत इतो देवः ।

राजा—(परिक्रम्य) जयसेने, ननु समाप्तकृत्यो गौतमः ।

---

नन्तरमित्यर्थः । प्रथमाङ्कप्रस्तुतमिदमङ्गुलीयकमिति न विस्मर्तव्यं सहृदयैः । **जयसेन इति** ॥ कर्मसिद्धौ सत्यां विषहरणकर्मणः फले ज्ञाते सति आशु मां प्रतिपत्तिं वृत्तान्तबोधं नय प्रापय । मां वृत्तान्तं ज्ञापयेत्यर्थः । प्रतिपत्तिमानयेति पाठे तु प्रतिपत्तिः प्रवृत्तिः वार्तेति यावत् तां मत्समीपं प्रापयेत्यर्थः । अत्र कर्मसिद्धिपदेन मालविकामोचनरूपकर्मसिद्धिरपि द्योत्यते । **देवीति** ॥ **यथा** यस्मात् **मे हृदयमाचष्टे** प्रसन्नतया सूचयति **तथा** तस्मात् 'सतां हि संदेहपदेषु' इत्यादिन्यायादिति भावः । अनेन वाक्येन विदूषकस्य कपटं परिव्राजिकया ज्ञातमिति गम्यते । **प्रकृतिस्थः** निर्विकारः । **वचनीयात्** अपवादात् । अत्र राज्ञो धारिण्युपसर्पणं विदूषकोपसर्पणानुकूलतया कविना कल्पितं विदूषकोपसर्पणं च उक्तोपायेन माल-

---

१. चास्या रुजः

जयसेना—अह इं। अथ किम्।

राजा—

इष्टाधिगमनिमित्तं प्रयोगमेकान्तसाधुमपि मत्वा।
संदिग्धमेव सिद्धौ कातरमाशङ्कते चेतः॥ ५॥

(प्रविश्य)

विदूषकः—जेदु[3] भवं। सिद्धाइ मे सव्वमङ्गलकम्माइ।

जयतु भवान्। सिद्धानि मे सर्वमङ्गलकर्माणि।

राजा—जयसेने, त्वमपि नियोगमशून्यं कुरु।

जयसेना—जं देवो आणवेदि।

यद्देव आज्ञापयति। (इति निष्क्रान्ता।)

राजा—वयस्य क्षुद्रा माधविका। न खलु किंचिद्विचारितमनया।

विदूषकः—देवीए अङ्गुलीअअमुद्दिअं देक्खिअ कहं विआरेदि।

देव्या अङ्गुलीयकमुद्रां दृष्ट्वा कथं विचारयति।

राजा—न खलु मुद्रामधिकृत्य ब्रवीमि। तयोर्बद्धयोः[4] किंनिमित्तोऽयं मोक्षः। किं वा देव्याः परिजनमतिक्रम्य भवान्संदिष्टः। इत्येवमनया प्रष्टव्यम्।

---

विकामोचनार्थमिति स्फुटम्। अमात्यविज्ञापनाकल्पनं च देवीं विसृज्य मालविकासमीपगमनार्थमिति च॥ **दर्शनेति**॥ **दर्शनेन** दर्शनदानेन योऽनुग्रहः तम्। **गच्छत्वित्यादि**॥ स्पष्टम्। अथौत्सुक्यातिरेकजनितसंभ्रमेणाह— **इष्टेति**॥ इष्टाधिगमस्य मालविकासङ्गमप्राप्तेः निमित्तं प्रयोगमुपायम् एकान्तसाधु नियमेन प्रशस्तम् अव्यभिचरितफलकमिति यावत्। मत्वापि बुद्ध्वापि चेतः मम मनः सिद्धौ इष्टसिद्धौ विषये संदिग्धं संशयः तद्यथा तथा आशङ्कते एव संशयात्मकशङ्कायुक्तमेव अथवा संदिग्धमेव संशययुक्तमेव अथ च आशङ्कते कार्यसिद्धौ सत्यामपीरावत्यादिभ्यो भीतं चेत्यर्थः। यद्वा साधुमपि प्रयोगं संदिग्धमेव मत्वेति योजना। शङ्काहेतुः— **कातरमिति**॥ संत्रान्तमित्यर्थः। विभावनालङ्कारः। इरावत्यागमनेन भविष्यदिष्टसिद्धिप्रतिबन्धोऽनेन द्योत्यते कविना। आर्या वृत्तम्। **जयतु भवानिति**॥ अभीष्टसिद्ध्या तव जयो जात इत्यर्थकं चेदमाचारवचनम्। **सिद्धानि** सफलानि **कर्माणि** क्रियाः। सर्वोपायाः फलिता इत्यर्थः। **वयस्येति**॥ **क्षुद्रा** अल्पबुद्धिः। अत्र हेतुः— **नेत्यादि**॥ खल्विति जिज्ञासायाम्। प्रत्यु-

---

१. हृदयं २. वड्ढदु भवं सिद्धाइं दे मङ्गलकम्माइं ३. वर्धतां भवान् सिद्धानि ते मङ्गलकर्माणि ४. एतयोर्द्वयोः किंनिमित्तो मोक्षः

**विदूषकः**—णं पुच्छिदोह्मि। पच्चुप्पण्णबुद्धिणा मए कहिदं।
नन्वु पृष्टोऽस्मि। प्रत्युत्पन्नबुद्धिना मया कथितम्।

**राजा**—कथ्यताम्।

**विदूषकः**—भणिदं मए। देव्वचिन्तएहिं विण्णाविदो राआ। सोवसग्गं वो णक्खत्तं। सव्वबन्धणमोक्खो करीअदुत्ति। तं सुणिअ देवीए इरावदीए चित्तं रक्खन्दीए राआ किल मोएदित्ति तुमं एव्व णं मोएहिदित्ति अहं संदिट्ठोह्मि त्ति। तदो जुज्जदित्ति ताए संपादिदो अत्थो।

भणितं मया—दैवचिन्तकैर्विज्ञापितो राजा—सोपसर्गं वो नक्षत्रम्। सर्वबन्धनमोक्षः क्रियतामिति। तच्छ्रुत्वा देव्येरावत्याश्चित्तं रक्षन्त्या राजा किल मोचयतीति त्वमेवैनां मोचयेस्त्वहं संदिष्टोऽस्मीति। ततो युज्यत इति तया संपादितोऽर्थः।

**राजा**—(विदूषकं परिष्वज्य) सखे, प्रियोऽहं तव।

नहि बुद्धिगुणेनैव सुहृदामर्थदर्शनम्।
कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते॥ ६॥

---

**त्पन्नेति**॥ प्रत्युत्पन्ना तत्कालोचिता बुद्धिर्यस्य तेन। **दैवचिन्तकैः** ज्योतिश्शास्त्रज्ञैः। विज्ञापनाप्रकारमाह—**सोपेति**॥ **सोपसर्गं** पापग्रहाक्रमणरूपदोषसहितं. तदिति शेषः। तत्प्रतीकारायेत्यर्थः। तच्छ्रुत्वा देव्या अहं संदिष्टोऽस्मीत्यन्वयः। अत्र हेतुः—**इरावत्याश्चित्तं रक्षन्त्येति**॥ तच्चित्तावर्जनार्थमित्यर्थः। मत्संदेशे तत्सिद्धिः कथमित्यत्राह—**राजा किल मोचयतीति**॥ इतिशब्दः प्रकाशने। राजकर्तृकं मोचनमिति प्रकाशनार्थेत्यर्थः। **त्वमेव** राजवयस्यस्त्वमेव। **एनां** मालविकां मोचयेति उक्तप्रकारेणाहं संदिष्ट उक्तः। इतीति अस्य भणितमित्यनेन संबन्धः। **युज्यत इतीति**॥ इत्युक्त्वेत्यर्थः। **तया** माधविकया **अर्थः** मालविकामोचनरूपं कार्यम् **संपादितः** निष्पादितः। **विदूषकं परिष्वज्येति**॥ परिष्वङ्गोऽयं महापारितोषिकस्थानीयः। श्लाघमान आह—**सखे इति**॥ सखित्वमुपपन्नमिति भावः। प्रियः प्रेमपात्रम्। **नहीति**। सुहृदां स्वस्निग्धानां योऽर्थः अभीष्टकार्यं तद्दर्शनं तदुपायदर्शनमिति यावत्। जनस्येति शेषः। बुद्धेर्गुणेन ऊहापोहादिगुणविशिष्टया बुद्ध्या एव नहि न भवति। किंतु स्नेहेनापि सूक्ष्मः

---

१. पुणो मन्दस्स मे तस्सिं पच्चुप्पण्णा मदी २. पुनर्मन्दस्य मे तस्मिन् प्रत्युत्पन्ना मतिः ३. भणिदा ४. भणिता.

**विदूषकः**—तुवरदु भवं। समुद्दघरए सहीसहिदं मालविअं ठाविअ भवन्तं पच्चुग्गदोह्मि।

त्वरतां भवान्। समुद्रगृहे सखीसहितां मालविकां स्थापयित्वा भवन्तं प्रत्युद्गतोऽस्मि।

**राजा**—अहमेनां संभावयामि। गच्छाग्रतः।

**विदूषकः**—एदु भवं। (परिक्रम्य) इदं समुद्दघरअं।

एतु भवान्। इदं समुद्रगृहकम्।

**राजा**—(साशङ्कम्) वयस्य, एषा कुसुमापचयव्यग्रहस्ता सख्यास्ते इरावत्याः परिचारिका चन्द्रिका समागच्छति। इतस्तावदावां भित्तिगूढौ भवावः।

**विदूषकः**— अहो कुम्भीलएहिं कामुएहिं वि परिहरणिज्जा खु चन्दिआ।

अहो कुम्भीलकैः कामुकैरपि परिहरणीया खलु चन्द्रिका।

(उभौ यथोक्तं कुरुतः।)

**राजा**—गौतम, कथं नु ते सखी मां प्रतिपालयति। एह्येनां गवाक्षमाश्रित्यावलोकयावः।

**विदूषकः**—तह। तथा।

(उभौ विलोकयन्तौ तिष्ठतः।)

(ततः प्रविशति मालविका बकुलावलिका च।)

**बकुलावलिका**—हला, पणम भट्टारं। हला प्रणम भर्तारम्।

**मालविका**—(सहर्षम्) णमो दे। कहिं भट्टा।

नमस्ते। कुत्र भर्ता।

---

कार्यसिद्धेः पन्था मार्गः उपाय इति यावत् उपलभ्यते ज्ञायते। अत्र सामान्यनिबन्धनाप्रस्तुतप्रशंसा। पथ्यावक्त्रं वृत्तम्। **त्वरतामिति**। **समुद्रगृहकमिति**॥ स्वार्थे कः। 'समुद्रगृहमित्युक्तं जलयन्त्रनिकेतनम्' इति हारावली। ग्रीष्मकालोपयोगीदं गृहम्। **प्रत्युद्गतः** उपागतः। **अहमिति**॥ **एनां** मालविकां **संभावयामि** उपगम्य संमानयामि। **वयस्येति**॥ कुसुमानामपचयः हस्तेन ग्रहणं तत्र व्यग्रः हस्तो यस्याः सा। भित्तिगूढौ भवाव इत्युक्तम्। भङ्ग्यानुमन्यते— **अहो इति**॥ अहो इति संबोधने। **चन्द्रिका** ज्योत्स्ना तदाख्या च। अत्र दीपकम्। **कथमिति**॥ **कथं** केन प्रकारेण। **गवाक्षं** वातायनम्। बकुलावलिका नर्मवचनमाह— **हलेति**॥ तद्वचसा भर्तुः सांनिध्यं मत्वाह— **नमस्त**

बकुलावलिका[1]—दुवारगदा भविअ पिट्ठदो देक्खिस्ससि ।

द्वारगता भूत्वा पृष्ठतो द्रक्ष्यसि ।

राजा—मन्ये प्रतिकृतिं मे दर्शयतीति ।

मालविका—(द्वारमवलोक्य सविषादम्) हला, विप्पलम्भेसि मं ।

हला, विप्रलम्भयसि माम् ।

राजा—सखे हर्षविषादाभ्यामत्रभवत्याः प्रीतोऽस्मि ।

सूर्योदये भवति या सूर्यास्तमये च पुण्डरीकस्य ।
वदनेन सुवदनायास्ते समवस्थे क्षणादूढे ॥ ७ ॥

बकुलावलिका—णं एसो चित्तगदो भट्टा ।

नन्वेष चित्रगतो भर्ता ।

उभे—(प्रणिपत्य) जेदु भट्टा । जयतु भर्ता ।

मालविका—हला, तदा ससंभमदिट्ठे भट्टिणो रूवे[2] अहं संमुहट्ठिदा तह[3] ण वितिण्हह्मि, जह अज्ज मए विभाविदो चित्तगदो भट्टा ।

हला, तदा ससंभ्रमदृष्टे भर्तू रूपे[4] अहं संमुखस्थिता तथा न वितृष्णास्मि, यथा मया विभावितश्चित्रगतो भर्ता ।

---

इति ॥ भर्तुः स्थानं निर्दिशति— द्वारगता भूत्वा पृष्ठतो द्रक्ष्यसीति ॥ क्वचिदयं पाठो न दृश्यते । मन्य इति प्रतिकृतिं प्रतिच्छायाम् । विप्रलम्भयसि वञ्चयसि । तदानीं मालविकावदने हर्षविषादानुभावावालक्ष्य सहर्षमाह— सख इति ॥ हर्षेति ॥ भर्तृसांनिध्यश्रवणजो हर्षः, पुनस्तददर्शनजो विषादः । हर्षविषादयोर्ज्ञापकावनुभावावाह—सूर्येति ॥ पुण्डरीकस्य सितपद्मस्य । पुण्डरीकोपमया गम्यया मुखस्य विरहपाण्डिमा गम्यते । सूर्योदये या समवस्था विकासरूपा सूर्यास्तमये च या समवस्था सङ्कोचरूपा । सुवदनायाः सुन्दर्या अस्याः । अनेन वदनस्य तदानीं विशेषतो मनोहारित्वं द्योत्यते । वदनेन कर्त्रा ते समवस्थे क्षणादूढे धृते । अत्र पदार्थवृत्तिनिदर्शना । तत्तुल्ये समवस्थे प्रसादमालिन्यरूपे धृते इत्यर्थः । प्रथमं हर्षः पश्चाद्विषाद इति च सूर्योदय इत्याद्युक्त्या प्रदर्श्यते । आर्या वृत्तम् । मया चित्रगतं भर्तारमुद्दिश्योक्तमित्यभिप्रायेणाह— नन्विति ॥ चित्रगतं भर्तारं सहर्षं विलोकयन्त्याह—हलेति ॥ भर्तुः रूपे आकृतौ ससंभ्रमदृष्टे पूर्वं प्रमदवने इरावत्यादिभयेन संभ्रमेण सहितं यथा तथा दृष्टे सति तदाहं संमुखस्थिता भर्तुः ।

---

१. एतद्बकुलावलिकावचनं बहुषु कोशेषु नास्ति २. रूवस्स ३. जह ण वितिण्हह्मि तह अज्जवि मए भाविदो अवितिण्हदंसणो भट्टा ४. रूपस्य ५. यथा न वितृष्णाऽस्मि तथाद्यापि मया भावितोऽवितृष्णदर्शनो भर्ता.

विदूषकः—सुदं भवदा । अत्तहोदीए जह दिट्ठो चित्ते ण तह दिट्ठो भवं त्ति मन्तिदं । मुहा दाणिं, मञ्जूसा विअ रअणभण्डं जोव्वणगव्वं वहेसि ।

श्रुतं भवता । अत्रभवत्या यथा दृष्टश्चित्रे न तथा दृष्टो भवानिति मन्त्रितम् । मुधेदानीं मञ्जूषेव रत्नभाण्डं यौवनगर्वं वहसि ।

राजा—सखे, कुतूहलवानपि निसर्गशालीनः स्त्रीजनः । पश्य—

कात्स्न्र्येन निर्वर्णयितुं च रूप-
मिच्छन्ति तत्पूर्वसमागमानाम् ।
न च प्रियेष्वायतलोचनानां
समग्रपातीनि[1] विलोचनानि ॥ ८ ॥

रूपस्येति पाठे तदा प्रमदवने दर्शनकाल इत्यर्थः । संमुखस्थितेत्यनेन तद्दर्शनं कुर्वतीत्यर्थो गम्यते । तथा वितृष्णा संतृप्ता नास्मि । कथमित्यत्राह— **यथेति** ॥ अत्र मया चित्रगतो भर्ता विभावितः संभ्रमं विना सम्यक् दृष्टः । अत इत्यर्थात् । यथा वितृष्णास्मीत्यनुषज्यते । मालविकावचनस्य सारार्थं विवृण्वन् सोपहासमाह—**श्रुतमिति** ॥ श्रुतमित्यत्र काक्वा प्रश्नः । **मञ्जूषा** पेटकः । **रत्नभाण्डं** रत्नं वस्तु रत्नालङ्कारो वा । मालविकया स्वस्य सम्यगदर्शने हेतुं सामान्येनाह—**सख इति** ॥ स्त्रीजनः कुतूहलवानपि । 'रम्यवस्तुसमालोके लोलता स्यात् कुतूहलम्' इति दर्पणे ॥ निसर्गेण स्वभावेन शालीनः अधृष्टः सलज्ज इत्यर्थः । उक्तं निसर्गशालीनत्वं तत्कार्येण साधयति— **कात्स्न्र्येनेति** ॥ आयतलोचनानां प्रियेष्विति पदद्वयस्य विपरिणामेन पूर्ववाक्येऽपि संबन्धः । आयतलोचनाः स्त्रियः । स एव पूर्वः समागमो येषाम् इदंप्रथमसमागमानामित्यर्थः । वक्ष्यमाणार्थे हेतुरिदम् । प्रियाणां रूपं वपुः कात्स्न्र्येन साकल्येन निर्वर्णयितुं द्रष्टुमिच्छन्ति च । आयतलोचनानामित्यनेन दृष्टिपतनस्य चारुत्वं द्योतितम् । विलोचनानि प्रियेषु समग्रं संपूर्णं पतन्तीति तथाभूतानि न भवन्ति च । साकल्येन प्रियरूपं द्रष्टुमिच्छन्त्योऽपि नवोढास्तथा कर्तुं न प्रभवन्तीत्यर्थः । सामान्यनिबन्धनाप्रस्तुतप्रशंसेयम् । मां साक्षात्सम्यगवलोकितुं कुतूहलवत्यप्यसौ मत्संनिधाने लज्जया सम्यगवलोकितुं न पारयतीति भावः । अथवा निसर्गशालीन इत्यस्य निसर्गेणाप्रौढ इत्यर्थः । तत्र हेतुं लज्जारूपं कार्यद्वारा प्रतिपादयति— **कात्स्न्र्येनेति** ॥ तथा च कार्यवर्णनेन लज्जारूपनिमित्तस्य गम्यमानत्वात् कार्यनिबन्धनाप्रस्तुतप्रशंसा च । अत्र श्लोके मुग्धास्वभावोक्तिश्च । उपजातिवृत्तम् । चित्रं विलोकयन्नाह— **हलेति** ॥ पार्श्वपरिवृत्तमु-

1. समग्रवृत्तीनि.

**मालविका**—हला, का एसा पासपरिउत्तवअणेण भट्टिणा सिणिद्धाए दिट्ठीए णिज्झाईअदि।

हला, कैषा पार्श्वपरिवृत्तवदनेन भर्त्रा स्निग्धया दृष्ट्या निध्यायते।

**बकुलावलिका**—णं इअं भट्टिणो पासगदा इरावदी।

नन्वियं भर्तुः पार्श्वगतेरावती।

**मालविका**—सहि, अदक्खिणो विअ भट्टा मे पडिभादि। जो सव्वं देवीजणं उज्झिअ एक्काए मुहे बद्धलक्खो।

सखि, अदक्षिण इव भर्ता मे प्रतिभाति। यः सर्वं देवीजनमुज्झित्वैकस्या मुखे बद्धलक्षः।

**बकुलावलिका**—(आत्मगतम्) चित्तगदं भट्टारं परमत्थदो संकप्पिअ असूअदि। होदु। कीडिस्सं दाव एदाए। (प्रकाशम्) हला, भट्टिणो वल्लहा एसा।

चित्रगतं भर्तारं परमार्थतः संकल्प्यासूयति। भवतु। क्रीडिष्यामि तावदेतया। हला, भर्तुर्वल्लभैषा।

**मालविका**—तदो किं दाणिं अत्ताणं आआसेमि।

ततः किमिदानीमात्मानमायासयामि।

(इति सासूयं परावर्तते।)

**राजा**—सखे, पश्य।

भ्रूभङ्गभिन्नतिलकं स्फुरिताधरोष्ठं
सासूयमाननमितः परिवर्तयन्त्या।

---

खेनेति पाठे भर्तृविशेषणम्। ईषत्परिवर्तितवदनेति पाठे एषेत्यस्य विशेषणम्। **निध्यायते** दृश्यते॥ **अदक्षिण इति**॥ 'एषु त्वनेकमहिलासमरागो दक्षिणः कथितः' इति दर्पणे। **बद्धलक्षः** व्यापृतदृष्टिः। **तत इति**॥ तर्हीत्यर्थः। सैव प्रिया चेदिति यावत्। **आयासयामि** राज्ञः प्राप्त्यर्थमायासं करोमि। निष्फलत्वान्नायासयामीति भावः॥ **सखे पश्येति**॥ द्रष्टव्यमेतदिति भावः। किं द्रष्टव्यमित्यत्राह—**भ्रूभङ्गेति**॥ पश्येत्यनन्तरं सख्या मुखमिति च क्वचित्पाठः। भ्रुवोर्भङ्गेन कुटिलीकरणेन भिन्नः विकृतः तिलको यत्र तत्। स्फुरितः अधरः अधस्तनः ओष्ठो यत्र तत्। अत एव सासूयं असूयाव्यञ्जकं परिवर्तनक्रियाविशेषणं वा।

---

१. ईसप्परिवट्टिदवदणा २. ईषत्परिवर्तितवदना ३. आआसइस्सं ४. आयासयिष्यामि ५. पश्य सख्या मुखं.

कान्तापराधकु[1]पितेष्वनया विनेतुः
संदर्शितेव ललिताभिनयस्य शिक्षा ॥ ९ ॥

विदूषकः—अणुणअसज्जो दाणिं होहि। अनुनयसज्ज इदानीं भव।

मालविका—[2]अज्जगोदमो वि एत्थ एव्व सेवदि णं।

[3]आर्यगौतमोऽप्यत्रैव सेवत एनम्।

(पुनः स्थानान्तराभिमुखीभवितुमिच्छति।)

बकुलावलिका—(मालविकां रुद्ध्वा) ण खु कुविदा दाणिं तुमं।

न खलु कुपितेदानीं त्वम्।

मालविका—जइ चिरं कुविदं एव्व मं मण्णेसि, एसो पच्चाणीअदि कोवो।

यदि चिरं कुपितामेव मां मन्यसे, एष प्रत्यानीयते कोपः।

राजा—(उपेत्य)

कुप्यसि कुवलयनयने चित्रार्पितचेष्टया कि[4]मेवमयि।
ननु तव साक्षादयमहमनन्यसाधारणो दासः ॥ १० ॥

बकुलावलिका—जेदु भट्टा। जयतु भर्ता।

मालविका—(आत्मगतम्) कहं चित्तगदो भट्टा मए असूइदो।

---

आननं मुखमितः चित्रात् परिवर्तयन्त्या निवर्तयन्त्या अनया कान्तस्य प्रियस्यापराधः परस्त्रीसंसर्गादिः तेन यत्कुपितं स्त्रीणां कोपः। रुषितेष्विति च पाठः। तेषु विषये ललिताभिनयस्य तत्कर्मिकेत्यर्थः। **विनेतुः** शिक्षकस्य गणदासस्य। तत्कर्तृकेत्यर्थः। **शिक्षा** अभ्यासः। **संदर्शिता** सम्यक् दर्शिता। इवेत्युत्प्रेक्षायाम्। वसन्ततिलकं वृत्तम्। **अनुनयसज्ज इति** ॥ कुपिताया अस्याः सान्त्वनाय संनद्ध इत्यर्थः। पुनश्चित्रं पश्यन्त्याह—**आर्येति** ॥ **अत्र** चित्रे। गौतमं प्रत्यप्यसूयात्र गम्या। **स्थानान्तरेति** ॥ चित्रादन्यस्थानेत्यर्थः। **न खल्विति** ॥ खल्विति प्रश्ने। सासूयमाह—**यदीति** ॥ **प्रत्यानीयते** प्रत्याह्रियते। यदि मत्कोपस्तव न हितस्तर्हि परित्यज्यत इति भावः। **कुप्यसीति** ॥ **अयि कुवलयनयने** नानाभावानां नयने स्फुरणात् तात्कालिकः नयनयोश्चारुत्वातिशयः संबुद्ध्या द्योत्यते। चित्रेऽर्पितया **चेष्टया** मम व्यापारेण **किं कुप्यसि**। मां प्रत्ययं कोपो न युक्त इत्यर्थः। अत्र हेतुमाह—**नन्विति** ॥ अयमहमनन्यसाधारणः तव दासः साक्षात् नन्विति संबन्धः। नन्वित्यनुनये। अत्र काव्यलिङ्गम्। आर्या वृत्तम्।

---

1. रुषितेषु 2. अज्जगोदमो एत्थ ण संसेवदि 3. आर्यगौतमोऽत्र न संसेवते 4. किमेतन्मे.

कथं चित्रगतो भर्ता मयासूयितः । (सव्रीडवदना अञ्जलिं करोति ।)

(राजा मदनकातर्यं रूपयति ।)

विदूषकः—किं भवं उदासीणो विअ । [किं भवानुदासीन इव ।

राजा—अविश्वसनीयत्वात्सख्यास्ते ।

विदूषकः—मा दाव अत्तहोदीए तुह अविस्सासो[1] ।

मा तावत्तत्रभवत्यां तवाविश्वासः[2] ।

राजा—श्रूयताम् ।

पथि नयनयोः स्थित्वा[3] स्वप्ने तिरोभवति क्षणा-
त्सरति सहसा बाह्वोर्मध्यं गतापि[4] सखी तव ।
मनसिजरुजा क्लिष्टस्यैवं[5] समागममायया
कथमिव सखे विस्रब्धं स्यादिमां प्रति मे मनः ॥ ११ ॥

बकुलावलिका—सहि, बहुसो किल तुए विप्पलद्धो भट्टा । ता दाव अत्ता विस्ससणिज्जो करीअदु ।

सखि, बहुशः किल त्वया विप्रलब्धो भर्ता । तत्तावदात्मा विश्वसनीयः क्रियताम् ।

---

राजानं प्रोत्साहयति— **किमिति** ॥ **अविश्वसनीयत्वादिति** ॥ उदासीन इत्यनुषङ्गः । **मा तावदिति** ॥ तत्रभवत्यां तवाविश्वासो माऽस्त्वित्यर्थः । अत्रभवत्यां कथं तवाविश्वासः इति च पाठः । **पथीति** ॥ हे सखे तव सखी इयमित्यर्थः । मे नयनयोः पथि स्थित्वा स्थित्वा भूयो भूयः नयनगोचरीभूयेत्यर्थः । क्षणात् तिरोभवति अदृश्या भवति । प्रथमदर्शनात्प्रभृत्यद्यावधि एवमिति प्रदर्शनाय लटा निर्देशः । भूतपूर्वं प्रमदवनसमागममनुचिन्त्याह—**सरतीति** ॥ मे बाह्वोः मध्यं गतापि सहसा आलिङ्गनात्पूर्वमेव सरत्यपगच्छति । वर्तमानसामीप्ये भूते लट् । पथि नयनयोः स्थित्वा स्वप्न इति क्वचित्पाठः । तत्पक्षे स्वप्नवृत्तान्तप्रतिपादकमिदम् । अयमेव पाठः साधुः स्वप्नसमागमोऽपीति वक्ष्यमाणनायिकावचनस्वरसात् वर्तमाननिर्देशस्वारस्याच्च । गतापि सखी तवेत्यत्र गताप्यबला सतीति क्वचित्पाठः । तत्पक्षे अबला अशक्ता सती सरतीत्यर्थः । इयमिति च शेषः । **एवम्** उक्तप्रकारेण । **समागममायया** मायातुल्येन क्षणिकेन समागमेन । विश्वासाभावे हेतुरयम् । **मनसिजरुजा** कामव्याधिना **क्लिष्टस्य** दुःखितस्य । अस्याः समागममायया मनसिजरुजा क्लेशस्य वृद्धिश्च जायते इत्यनेन द्योत्यते । **मे मनः इमां** मालविकां प्रति **कथमिव विस्रब्धं** विश्वस्तं स्यात् । कथमपि न स्यादित्यर्थः । प्रतारि-

---

१. अत्तहोदीए कहं तुह अविस्सासो २. अत्रभवत्यां कथं तवाविश्वासः ३. स्थित्वा ४. गताप्यबला सती ५. क्लिश्यत्येवं.

मालविका—सहि, मह उण मन्दभग्गाए सिविणसमाअमो वि भट्टिणो दुल्लहो आसि ।

सखि, मम पुनर्मन्दभाग्यायाः स्वप्नसमागमोऽपि भर्तुर्दुर्लभ आसीत् ।

बकुलावलिका—भट्टा देउ[1] से उत्तरं । भर्ता देदात्वस्या उत्तरम्[2] ।

राजा—

उत्तरेण किमात्मैव पञ्चबाणाग्निसाक्षिकम् ।
तव सख्यै मया दत्तो न सेव्यः सेविता रहः ॥ १२ ॥

बकुलावलिका—अणुगहिदह्मि[3] । अनुगृहीतास्मि[4] ।

विदूषकः—(परिक्रम्य ससंभ्रमम् ।) बउलावलिए, एसो बालासोअरुक्खस्स पल्लवाइं हरिणो लंघिदुं[5] आअच्छदि । एहि णिवारेम णं ।

बकुलावलिके, एष बालाशोकवृक्षस्य पल्लवानि हरिणो लङ्घितुमागच्छति[6] । एहि निवारयाव एनम् ।

कायामविश्वासस्यैवोचितत्वान्नास्यां मे विश्वास इति भावः । पूर्वार्धे मुग्धास्वभावोक्तिः । हरिणी वृत्तम् । सखीति ॥ विप्रलब्धः प्रतारितः । भर्त्रा ठक्कं सख्यमिति भावः । सखीति ॥ मन्दभाग्याया इति हेतुगर्भम् । मम पुनः । पुनश्शब्दो विशेषद्योतक । भर्तुः स्वप्नसमागमोऽपि दुर्लभ इति संबन्धः । अस्य तु स्वप्नसमागमः सुलभ इति पथीत्यादिवचनात्सुज्ञेयः । मम तु स्वप्नसमागमोऽपि दुर्लभ इति भर्त्रैवाहं विप्रलब्धा । अतोऽहमेव विश्वसनीयेति बाह्यार्थः । स्वप्नालाभात् स्वप्नसमागमो दुर्लभ इत्यान्तरार्थः । उत्तरेणेति ॥ उत्तरेण अन्येनोत्तरेण किं किं फलं, न किमपि । तर्हि किमत्र क्रियत इत्यत्र प्रतिज्ञामाह—आत्मेति ॥ मया आत्मैव देह एव न त्वात्मीयमन्यत् किंचित् । पञ्चबाण एवाग्निः साक्षी यस्मिंस्तथा । अग्निसाक्षिको हि विवाहः । तव सख्यै अस्यै । तव सख्यै इत्यनेन त्वमप्यत्र साक्षिणीति द्योत्यते । दत्तः अर्पितः । अत इत्यर्थात् । रहः सेविता एकान्ते अस्याः सेवकोऽस्मि । न सेव्यः अहमनया न सेवनीय इत्यर्थः । मया अस्याः परिचर्या कर्तव्या नानया ममेति भावः । यद्वा रहस्सेविता एकान्तेऽस्याः परिचारकोऽहमस्मि । अतस्त्वया न सेव्यः । इदानीं त्वत्सेवावसरो नास्ति इतो गम्यतामिति भावः । एतदनुगुणमेवाग्रे विदूषकवचनम् । अत्र पञ्चबाणेऽग्नित्वारोपस्य देहार्पणरूपकार्योपयोगित्वात् परिणामालङ्कार इति प्राञ्चः । वस्तुतो रूपकमेव । पथ्यावक्त्रं वृत्तम् । परमसंतोषं प्रकाशयन्त्याह— अनुगृहीतेति ॥ राज्ञो मालविकया सह सङ्गमाय तद्देशस्य विज-

१. कहेदु २. कथयतु ३. अणुगहीदह्म ४. अनुगृहीताः स्वः ५. लङ्घेदि हरिणो ६. लङ्घयति हरिणः

बकुलावलिका—तह । तथा । (इति प्रस्थिता ।)

राजा—[1]एवमस्मद्रक्षणे वयस्येनावहितेन भवितव्यम् ।

विदूषकः—[2]एदं वि गोदमो णं संदिस्सइ ।

[3]एतदपि गौतमो ननु संदिश्यते ।

बकुलावलिका—(परिक्रम्य) अज्ज गोदम, अहं अप्पआसे चिट्ठामि । तुमं दुवाररक्खओ होहि ।

आर्य गौतम, अहमप्रकाशे तिष्ठामि । त्वं द्वाररक्षको भव ।

विदूषकः—जुज्जइ । युज्यते ।

(निष्क्रान्ता बकुलावलिका ।)

विदूषकः—(परिक्रम्यावलोक्य च) [4]इदं दाव फलिअत्थलं आसीणो होमि । (इति तथा कृत्वा) अहो सुहप्फरिसदा सिलाविसेसस्स ।

[5]इदं तावत्स्फटिकस्थलम् । आसीनो भवामि । अहो सुखस्पर्शता शिलाविशेषस्य । (इति निद्रायते ।)

(मालविका ससाध्वसा तिष्ठति ।)

राजा—

विसृज सुन्दरि संगमसाध्वसं
तव चिरात्प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां
त्वमतिमुक्तलताचरितं मयि ॥ १३ ॥

---

नतां संपादयितुं प्रत्युत्पन्नमतिर्नर्मसचिव आह—**बकुलेति** ॥ **लङ्घितुं** भक्षणार्थं प्राप्तुम् । **निवारयावः** आवामिति शेषः । अत आवाभ्यामितो गन्तव्यमिति भावः । धीमती बकुलावलिका तदाशयं ज्ञात्वाह— **तथेति** ॥ प्रस्थानोद्यतं नर्मसचिवमिरावत्यादिभ्यो भयेनाह—**एवमिति** ॥ **एवं** यथा सङ्घटने तथा । यद्वा एवमिति समासघटकमेवंभूतयोरावयोरित्यर्थः । सङ्क्षेपमाह— **एतदपीति** ॥ गौतम इत्यनेनार्थान्तरसंक्रमितेन बुद्धिमत्त्वादिकं द्योत्यते । नन्विति प्रश्ने । न संदेष्टव्यमिति भावः । **अप्रकाशे** परैरदृश्ये देशे । मालविकायाः साध्वसमपाचिकीर्षुरावर्जनायाह— **विसृजेति** ॥ हे सुन्दरि त्वत्सौन्दर्यवशीकृतोऽहं विलम्बं सोढुं न शक्नोमीति संबुद्ध्या द्योत्यते । त्वं सङ्गमस्य तत्संबन्धि यत् साध्वसं मया सह सङ्गमे

---

१. वयस्य एवमेवास्मिन्रक्षणक्षणेऽवहितेन त्वया भवितव्यं २. एव्वं वि गोदमो संदिसेअदि ३. एवमपि गौतमः संदिश्यते ४. इमं दाव फलिहक्खम्भं अस्सिदो होमि ५. इदं तावत्स्फटिकस्तम्भमाश्रितो भवामि.

**मालविका**— देवीए भएण अत्तणो वि पिअं कादुं ण पारेमि ।

देव्या भयेनात्मनोऽपि प्रियं कर्तुं न पारयामि ।

**राजा**—अयि, न भेतव्यम् ।

**मालविका**—(सोपहासम्) जो ण भाएदि, सो मए भट्टिणीदंसणे दिट्ठसामत्थो भट्टा ।

यो न बिभेति, स मया भट्टिनीदर्शने दृष्टसामर्थ्यो भर्ता ।

**राजा**—

दाक्षिण्यं नाम बिम्बोष्ठि वैम्बिकानां कुलव्रतम् ।
तन्मे दीर्घाक्षि ये प्राणास्ते त्वदाशानिबन्धनाः ॥ १४ ॥

---

यदन्यस्मात् भयं तद्विसृज । तद्विसृज्येदमादौ कार्यमित्याह—**त्वेत्यादि** ॥ **चिरात्प्रभृति** बहुकालादारभ्य तव यः प्रणयः मद्विषयः प्रेमा विश्वासो वा तस्मिन्नुन्मुखे तत्परे । अथवा प्रणयः सङ्गमप्रार्थना तेन हेतुना उन्मुखः सङ्गमाय उद्युक्तः तस्मिन् । अत एवाद्य सहकारतामाम्रवृक्षतां गते मयि । मयि सहकारतां गते सतीति वा । त्वम् अतिमुक्तलता माधवीलता तस्याश्चरितमाचरणं परिगृहाण स्वीकुरु । यथातिमुक्तलता सहकारं दृढं परिवृणोति तथा त्वं मामालिङ्गेत्यर्थः । लतावेष्टितं नामालिङ्गनमनेन दर्शितम् । मामालिङ्गेत्युक्तेः ग्राम्यत्वात् तद्बाधनार्थमित्थमुक्तम् । अत एव पर्यायोक्तम् । अतिमुक्तलताचरितादेरारोपात् पदार्थवृत्तिनिदर्शना चालङ्कारः । द्रुतविलम्बितं वृत्तम् । **न भेतव्यमिति** ॥ राजवचनमाकर्ण्य सोपहासमाह— **य इति** ॥ **भट्टिनीदर्शने** इरावतीदर्शने । भयहीनस्य तव सामर्थ्यमिरावतीदर्शने दृष्टमित्यर्थः । इरावतीदर्शने राज्ञः संभ्रमजननादियमुपहासोक्तिः । त्वमपि भीतः किमुताहमित्यर्थापत्तिरनेन ध्वन्यते । **दाक्षिण्यमिति** ॥ हे बिम्बोष्ठि इति संबुद्ध्या अधरपानौत्सुक्यं द्योत्यते । **दाक्षिण्यं** सर्वनायिकासु । समानत्वम् नामेति प्राकाश्ये । दाक्षिण्यप्रकाशनमित्यर्थः । **वैम्बिकानाम्** अग्निमित्रवंशजा वैम्बिका इत्युच्यन्ते । नायकानामिति क्वचित्पाठः । **कुलव्रतं** कुलाचारवदवश्यं पालनीयम् । अतो दाक्षिण्येनैव मया इरावत्याः अनुनयः कृत इति भावः । इत्थं सामान्येन स्वावस्थामुक्त्वा विशेषमाह— **तदिति** ॥ **तत्** तथापि दाक्षिण्येऽपीत्यर्थः । हे दीर्घाक्षि मे ये प्राणाः ते त्वदाशा त्वत्प्राप्त्यभिलाषः सैव निबन्धनं स्थितिहेतुः येषां ते भवन्ति । कदापि त्वत्प्राप्तिः स्यादित्याशयैव मम प्राणास्तिष्ठन्तीत्यर्थः । त्वत्प्राप्त्यभावे तु प्राणा अपगमिष्यन्तीति भावः । अनेन त्वमेवाधिकप्रियेति द्योतितम् । दीर्घाक्षीत्यनेन चेयं मदवस्था त्वया प्रत्यक्षीकर्तुं शक्येति च । पूर्वार्धेऽप्रस्तुतप्रशंसा । पथ्यावक्त्रं वृत्तम् । उपसंह-

---

१. सोपालम्भं २. नायकानां.

तदनुगृह्यतां चिरानुरक्तोऽयं जनः । (इति संश्लेषमभिनयति ।)

(मालविका नाट्येन परिहरति ।)

राजा—(आत्मगतम्) रमणीयः खलु नवाङ्गनानां मदनविषयावतारः । एषा हि—

[1]हस्तं कम्पवती रुणद्धि रशनाव्यापारलोलाङ्गुलिं
हस्तौ स्वौ नयति स्तनावरणतामालिङ्ग्यमाना बलात् ।
पातुं [2]पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननं
व्याजेनाप्यभिलाष[3]पूरणसुखं निर्वर्तयत्येव मे ॥ १५ ॥

---

रति— तदिति ॥ संश्लेषमालिङ्गनम् । नाट्येन परिहरतीति ॥ आलिङ्गनप्रतिषेधमभिनयतीत्यर्थः । तत्प्रतिषेधेनापि संतुष्यन् स्वयमाह—रमणीय इति ॥ नवाङ्गनानां नवोढानां सुन्दरीणां मदनविषयः कामोपभोगः आलिङ्गनादिसुखानुभव इति यावत् । तत्रावतारः प्रथमप्रवेशः । प्राथमिको मदनव्यापार इति यावत् । रमणीयः खलु मनोहर एव । उक्तमुपपादयति— एषा हि हस्तमिति ॥ एषा मन्नयनचकोरचन्द्रिकायमाणा मुग्धेयम् । कम्पः साध्वसेन मदनावेशेन वा जनितो वेपथुः तद्वती सती । रशना वस्त्रग्रथनकाञ्चिः तस्यां यो व्यापारः तन्मोचनरूपः तत्र लोलाः सतृष्णाः व्यापृता इति यावत् अङ्गुल्यः यस्य तं हस्तं मम करं रुणद्धि । हस्तं कम्पयते रुणद्धि मदनव्यापारलोलाङ्गुलीरिति च पाठः । किं च बलादालिङ्ग्यमाना सती स्वौ हस्तौ स्तनावरणतां नयति हस्ताभ्यां स्तनावावृणोतीत्यर्थः । अनेन स्तनाच्छादनवस्त्रं मोचयित्वा राज्ञा आलिङ्गनं कृतमिति च गम्यते । तथा मे पातुं चुम्बितुम् उन्नमयतः ऊर्ध्वमभिमुखं नयतः । आननमित्यत्रापि संबध्यते । 'षष्ठी चानादरे' इति षष्ठी । उन्नमयन्तं मामनादृत्येत्यर्थः । पक्ष्मलनेत्रं पक्ष्मलचक्षुरिति च पाठः । अक्षिसौन्दर्यकथनेनाक्ष्णोस्तत्कालोल्लसिता लज्जौत्सुक्यहर्षादयो भावा द्योत्यन्ते । आननम् अनिति जीवत्यनेनेत्यन्वर्थं साचीकरोति वक्रीकरोति । परावर्तयतीति यावत् । व्याजेन उक्तविधविसंमतिव्याजेन । अन्तरनुमतिरेवेति भावः । अपीति विरोधार्थकः । किमुत व्याजं विनेत्यर्थको वा । मेऽभिलाषस्य संभोगाभिलाषस्य पूरणेन साफल्येन यत्सुखं तत् निर्वर्तयति निष्पादयति एव । पूरणमहो इति च पाठः । अत्र कारकदीपकम् । मुग्धास्वभावोक्तिश्च । शार्दूलविक्रीडितं वृत्तम् । इरावत्याः परिचारिका चन्द्रिकेत्यादिना सूचितमिरावतीप्रवेशमवसरे आह— तत इति ॥ हञ्जे इति ॥ चन्द्रिकया दृष्ट इति त्वया संदिष्टमुक्तं सत्यं काक्वा प्रश्नः । त्वया संदिष्टमित्यस्य स्थाने त्वं परिगतार्थेति

---

१. हस्तं कम्पयते रुणद्धि रशनाव्यापारलोलाङ्गुलीः २. पक्ष्मलचक्षुरुन्नमयतः ३. पूरणमहो.

(ततः प्रविशतीरावती निपुणिका च ।)

**इरावती**—हञ्जे णिउणिए, सच्चं तुए[1] संदिट्ठं चन्दिआए समुद्दघरअलिन्दए[2] अज्जगोदमो[3] एआई दिठ्ठोत्ति ।

हञ्जे निपुणिके, सत्यं त्वया[4] संदिष्टं चन्द्रिकया समुद्रगृहालिन्दे[5] आर्यगौतम[6] एकाकी दृष्ट इति ।

**निपुणिका**—अण्णहा कहं भट्टिणीए विण्णवेमि ।

अन्यथा कथं भट्टिन्यै विज्ञापयामि ।

**इरावती**—तेण हि तहिं एव्व गच्छह्म । संसआदो मुत्तं भट्टिणो पिअवअस्सं पेक्खिदुं[7] अ ।

तेन हि तत्रैव गच्छावः । संशयान्मुक्तं भर्तुः प्रियवयस्यं प्रेक्षितुं[8] च ।

**निपुणिका**—सावसेसं विअ भट्टिणीए वअणं ।

सावशेषमिव भट्टिन्या वचनम् ।

**इरावती**—आम[9] । चित्तगदं भट्टारं पसादेदुं ।

आम[10] । चित्रगतं भर्तारं प्रसादयितुम् ।

**निपुणिका**—अह दाणिं भट्टा एव्व किं ण पज्जणुणीअदि ।

अथेदानीं भर्तैव किं न प्रत्यनुनीयते ।

**इरावती**—मुद्धे, जारिसो चित्तगदो णं[11] तारिसो एव्व । अण्णसंकन्दहिअओ अज्जउत्तो । केवलं उवआरादिक्कमं पमज्जिदुं अअं आरम्भो ।

मुग्धे, यादृशश्चित्रगतो ननु[12] तादृश एव । अन्यसंक्रान्तहृदय आर्यपुत्रः । केवलमुपचारातिक्रमं प्रमार्ष्टुमयमारम्भः ।

---

च पाठः । इति चन्द्रिकया त्वं परिगतार्था विज्ञातार्था यत् तत्सत्यं किमिति तदर्थः । आर्यगौतम इत्यस्मात्पूर्वं प्रकृतिस्थ इति च क्वचित्पाठः । **अन्यथेति** ॥ **अन्यथा** तस्यासत्यत्वे **कथं** किं, नैवेति भावः । **संशयान्मुक्तं** सर्पदंशोद्भूतान्मरणसंशयान्निर्गतम् । **प्रेक्षितुमिति** ॥ प्रष्टुमिति क्वचित्पाठः । **सावशेषमिवेति** ॥ प्रेक्षितुं चेति चकारप्रयोगेण सावशेषमिव प्रतिभातीत्यर्थः । आमेत्यनुवादे । अन्यच्चास्तीत्यर्थः । अथेति प्रश्ने । **भर्तैव** बिम्बभूतः साक्षाद्भर्तैव । **प्रत्यनुनीयते** प्रसाद्यते ॥ **मुग्धे इति** ॥ मुग्धे मूढे यादृशः यादृग्विधः मय्यासक्तः स्निग्धदृष्टिरित्यर्थः ।

---

१. तुमं परिगदत्था २. अलिन्दसइदो ३. पकिदिट्ठो अज्जगोदमो ४. त्वं परिगतार्था ५. गृहालिन्दशयितः ६. प्रकृतिस्थ आर्यगौतमः ७. पुच्छिदुं ८. प्रष्टुं ९. अण्णं च चित्तगदं अज्जउत्तं पसादेदुं १०. अन्यच्च चित्रगतमार्यपुत्रं प्रसादयितुं ११. णं १२. ननु.

**निपुणिका**—इदो इदो भट्टिणी । इत इतो भट्टिनी ।

(उभे परिक्रामतः ।)

(प्रविश्य)

**चेटी**—जेदु भट्टिणी । देवी भणादि । ण मे एसो मच्छरस्स कालो । केवलं तुह खु बहुमाणं वड्ढेदुं वअस्साए सह णिअलबन्धणे किदा मालविआ । जइ अणुमण्णेसि अज्जउत्तस्स पिअं कादुं इच्छाम्मि । जं तुह इच्छिअं तं मे भणाहि त्ति ।

जयतु भट्टिनी । देवी भणति—न मे एष मत्सरस्य कालः । केवलं तव खलु बहुमानं वर्धयितुं वयस्यया सह निगलबन्धने कृता मालविका । यद्यनुमन्यसे आर्यपुत्रस्य प्रियं कर्तुमिच्छामि । यत्तवेष्टं तन्मे भणेति ।

**इरावती**—णाअरिए, विण्णवेहि देविं । का वअं भट्टिणिं णिओजेदुं । [1]परिअणणिग्गहेण मइ दंसिदो सिणेहो । कस्स वा अण्णस्स पसादेण अअं जणो वड्ढदित्ति ।

नागरिके, विज्ञापय देवीम् । का वयं भट्टिनीं नियोजयितुम् । [2]परिजननिग्रहेण मयि दर्शितः स्नेहः । कस्य वान्यस्य प्रसादेनायं जनो वर्धत इति ।

**चेटी**—तह । तथा । (इति निष्क्रान्ता ।)

---

चित्रगतः चित्रलिखितः । इरावतीं स्निग्धया दृष्ट्या निध्यायमानो भर्ता चित्रे लिखित इति मालविकामुखेन पूर्वमाविष्कृतमिति बोध्यम् । **न तादृश एव** । अद्य मय्यासक्तो नैवेत्यर्थः । अत्र हेतुः—**अन्येत्यादि** । अतः चित्रगतः प्रसाद्यत इति भावः । नन्वेवं प्रसादनं व्यर्थं भर्त्रा तस्याज्ञानादित्यत आह—**केवलमिति** ॥ उपचारः भर्त्रा कृतः पादपतनपर्यन्तः, प्रणते भर्तरि कोपं परित्यज्य तच्चित्तानुसरणरूपो वा तस्यातिक्रममुल्लङ्घनं प्रमार्ष्टुं तदपराधजनितपापमपनेतुम् तत्प्रतिविधानं कर्तुमिति यावत् । धारिण्याश्चेटी प्रविश्याह— **जयत्विति** ॥ **न मे एष मत्सरस्य काल इति** ॥ **एषः मत्सरस्य** तत्कार्यस्य परपीडनस्य **न कालः** समयः । अस्य हेतुः स्फुटीभविष्यति । यद्यनुमन्यसे तवानुमतं चेत् तदा **आर्यपुत्रस्य प्रियं कर्तुमिच्छामीति** ॥ प्रियपदेनात्र मालविकां निगळान्मोचयित्वा राज्ञे तत्प्रदानरूपार्थो गूढः सामान्येन निर्दिष्टः । **का वयमिति** ॥ वयमनधिकारिण्य इति भावः । स्नेह इत्यत्रानुग्रह इति च पाठः । इति विज्ञापयेत्यन्वयः ।

---

१. परिअणणिअलणे दंसिदो मइ अणुग्गहो । कस्स वा पसादेण— २. परिजननिगलने दर्शितो मय्यनुग्रहः । कस्य वा प्रसादेन—

**निपुणिका**—(परिक्रम्यावलोक्य च) भट्टिणि, एसो दुवारुद्देसे समुद्दघरअस्स विपणिगदो विअ बलीवद्दो अज्जगोदमो आसीणो एव्व णिद्दाअदि ।

भट्टिनि, एष द्वारोद्देशे समुद्रगृहस्य विपणिगत इव बलीवर्द आर्यगौतम आसीन एव निद्रायते ।

**इरावती**—अच्चाहिदं । ण खु सावसेसविसविआरो हवे ।

अत्याहितम् । न खलु सावशेषविषविकारो भवेत् ।

**निपुणिका**— पसण्णमुहवण्णो दीसइ । अवि अ धुवसिद्धिणा चिइच्छिदो । ता से असङ्कणिज्जं पावं ।

प्रसन्नमुखवर्णो दृश्यते । अपि च ध्रुवसिद्धिना चिकित्सितः । तदस्याशङ्कनीयं पापम् ।

**विदूषकः**—(उत्स्वप्नायते ।) भोदि मालविए । भवति मालविके ।

**निपुणिका**—सुदं भट्टिणीए । [1]कस्स एसो अत्तणीणो हदासो किदवो । सव्वकालं इदो एव्व सोत्थिवाअणमोदएहिं कुच्छि पूरिअ संपदं मालविअं ऊसिविणाअदि ।

श्रुतं भट्टिन्या । [2]कस्यैष आत्मनीनो हताशः कितवः । सर्वकालमित एव स्वस्तिवाचनमोदकैः कुक्षिं पूरयित्वा सांप्रतं मालविकामुत्स्वप्नायते ।

**विदूषकः**—इरावदिं अदिक्कमन्दी होहि ।

इरावतीमतिक्रामन्ती भव ।

**निपुणिका**—सुदं एदं [3]अच्चहिदं । इमं भुअङ्गभीरुअं बह्मबन्धुं इमिणा भुअङ्गकुडिलेण दण्डकट्ठेण तम्भन्दरिदा भाअइस्सं ।

---

**भट्टिनीति** ॥ विपणिः पण्यवीथिका । निद्रायते निद्रां करोति । **अत्याहितमिति** ॥ महाभीतिरित्यर्थः । खल्विति जिज्ञासायाम् । सावशेषः विषावकारो यस्य सः । एष इति शेषः । श्रुतमित्यत्र काक्वा प्रश्नः । **कस्यैष इति** ॥ हताशः कितवः एषः कस्यात्मनीन इत्यन्वयः । आत्मने हितः आत्मनीनः । कस्यात्मनीनः न कस्यापीत्यर्थः । कस्यापीति पाठे त्वपिशब्दः प्रश्नद्योतकः । उत्स्वप्नः निद्रावशस्य वचनम् । अत्र दोषोद्घाटनादपवादो नाम संध्यङ्गम् । रोषभाषणात् संफेटश्च । अतिक्रा-

---

१. कस्सवि; कस्स एसो अत्तणिओअसंपादणे विस्ससणिज्जो हदासो. २. कस्यापि; कस्यैष आत्मनियोगसंपादने विश्वसनीयो हताशः ३. अच्चाहिदं.

श्रुतमेतदत्यहितम्[1] । इमं भुजंगभीरुं ब्रह्मबन्धुमनेन भुजंगकुटिलेन दण्डकाष्ठेन स्तम्भान्तरिता भीषयिष्यामि ।

इरावती—अरुहदि[2] एव्व किदग्घो उवद्दवस्स ।

अर्हत्येव[3] कृतघ्न उपद्रवस्य ।

(निपुणिका विदूषकस्योपरि दण्डकाष्ठं पातयति ।)

विदूषकः—(सहसा प्रबुध्य) अविह् अविह् । भो दव्विअरो मे उवरि[4] पडिदो ।

अविध अविध । भो दर्वीकरो म उपरि पतितः ।

राजा—(सहसोपसृत्य) सखे, न भेतव्यं न भेतव्यम् ।

मालविका—(अनुसृत्य) भट्टा, मा दाव सहसा णिक्कम । सप्पोत्ति भणादि ।

भर्तः, मा तावत्सहसा निष्काम । सर्प इति भणति ।

इरावती—हद्धि हद्धि । भट्टा इदो एव्व धावदि ।

हा धिक् हा धिक् । भर्ता इत एव धावति ।

विदूषकः—(सप्रहासम्) कहं दण्डकट्ठं एदं । अहं उण जाणे जं मए केदईकण्टएहिं दंसं करिअ सप्पस्स[5] विअ दंसो किदो तं फलिदंति ।

कथं दण्डकाष्ठमेतत् । अहं पुनर्जाने यन्मया केतकीकण्टकैर्दंशं कृत्वा सर्पस्येव दंशः कृतः तत्फलितमिति ।

(प्रविश्य पटाक्षेपेण)

बकुलावलिका—मा दाव भट्टा पविसदु । इह कुडिलगई सप्पो विअ दीसइ ।

मा तावद्भर्ता प्रविशतु । इह कुटिलगतिः सर्प इव दृश्यते ।

---

मन्त्यतिशयाना । **अत्याहितम्** ॥ अतिशयेनाहितकरम् । अत्याहितमिति च पाठः । **अर्हत्येवेति** ॥ **उपद्रवस्येति** ॥ कर्मणः शेषत्वविवक्षया षष्ठी । एषोऽर्हति सर्पदंशस्येति क्वचित्पाठः । अविहेति दुःखद्योतकम् । भो इति राजानं प्रत्युक्तिः । दर्वीकरः सर्पः । अत्रोद्वेजनात् द्युतिरिति संध्यङ्गम् । अपायदर्शी स्नेह इति नीत्या मालविकाह— **भर्त इति** ॥ सहसा अविमृश्य मा निष्कामेत्यत्र हेतुमाह—**सर्प इति** ॥ **पटाक्षेपेण प्रविश्येति** ॥ यवनिकां विना प्रविश्याहेति शेषः । अनेन संभ्रमो द्योत्यते । **मा तावद्भर्ता प्रविशत्विति** ॥ अत्र हेतुमाह— **इहेति** ॥

---

१. अत्याहितं २. एसो अरुहदि सप्पदंसस्स ३. एषोऽर्हति सर्पदंशस्य ४. सप्पस्स उवरि अअसा किदं तं मे फलिदं ५. सर्पस्योपर्ययशः कृतं तन्मे फलितं.

**इरावती**—(राजानं सहसोपसृत्य) अवि णिव्विग्घमणोरहो दिवासंकेदो मिहुणस्स ।

अपि निर्विघ्नमनोरथो दिवासंकेतो मिथुनस्य ।

(सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः ।)

**राजा**—प्रिये, अपूर्वोऽयमुपचारः ।

**इरावती**—बउलावलिए, दिट्ठिआ दुच्चाहिआरविसआ संपुण्णा दे पडिण्णा ।

बकुलावलिके, दिष्ट्या दूत्याधिकारविषया संपूर्णा ते प्रतिज्ञा ।

**बकुलावलिका**—पसीददु भट्टिणी । किं णु खु दद्दुरा वाहरन्दि त्ति देव्वो पुढवीए वरिसिदुं सुमरदि ।

प्रसीदतु भट्टिनी । किं नु खलु दर्दुरा व्याहरन्तीति देवः पृथिव्यां वर्षितुं स्मरति ।

---

कुटिलप्रकृतिरिरावतीवात्र दृश्यत इत्यर्थोऽनेन द्योत्यते । सेर्ष्यमाह— **अपीति** ॥ अपीति प्रश्ने । निर्विघ्नः मनोरथः भोगरूपः यत्र सः । **दिवा सङ्केतः** दिन एवोपभोगस्य स्थानम् । **मिथुनस्य** युवयोः । **अपूर्वः** नवीनः । दृष्टे हि प्रिये स्वागतादिकं प्रष्टव्यं तदपहाय यदेवं पृष्टं तदपूर्वमित्यर्थः । **दिष्ट्येति** ॥ दिष्ट्या दैवगत्या । **दूत्याधिकारेति** ॥ दूत्यानुरूपो योऽधिकारः नायकयोः सङ्घटनं स विषयो यस्याः सा । दूत्यधिकारेति वा पाठः । दूत्याः योऽधिकारः सः । दूत्यभिसारेति क्वचित्पाठः । दूत्याः मालविकायाः योऽभिसारः स इति तदर्थः । संपूर्णेत्यत्र काका प्रश्नः । **प्रसीदत्विति** ॥ प्रसीदतु भट्टिनी । किं मया कृतमिति देवः प्रष्टव्यः । दर्दुरा व्याहरन्तीति किं देवः पृथिव्यां वर्षितुं स्मरतीति पाठः साधुः । पाठान्तराण्यत्र दृश्यन्ते । **किं मयेति** ॥ मया किमपि न कृतमिति भावः । इममर्थं सोदाहरणं साधयति— **दर्दुरा इति** ॥ दर्दुराः भेकाः व्याहरन्ति शब्दायन्ते । इतीति हेतौ । मण्डूकशब्देन वर्षणमिति लोकवादानुरोधेनेदमुक्तम् । देवः इन्द्रः पृथिव्यां वर्षितुं किं स्मरति आरभते नैवेत्यर्थः किन्तु स्वेच्छयैवेति भावः । यथा इन्द्रः मण्डूकशब्देन हेतुना पृथिव्यां वर्षितुं न प्रवर्तते तथायं भर्ता मद्वचनेन मालविकायां न प्रवर्तत इति भावः । सादृश्यनिमित्ताप्रस्तुतप्रशंसा । मध्यस्थ इवाह— **मा तावदिति** ॥ विपरीतमेतदित्यर्थः । अनुचितमेतदिति यावत् । किमित्यत्राह— **भवत्या इत्यादि** ॥ **प्रणतीति** ॥ स्वयंकृतस्य प्रणामस्य लङ्घनं त्वत्कृतमतिक्रमणम् ।

---

१. स्तम्भान्तरिता राजानमुपेत्य २. दुच्चाहिआरविसआ; दुच्चाहिसारविसआ ३. दूत्यधिकारविषया; दूत्यभिसारविषया ४. वाहरन्दित्ति देवीए पुढवीए देव्वो वरिसिदुं विरमदि ५. व्याहरन्तीति देव्यां पृथिव्यां देवो वर्षितुं विरमति.

**विदूषकः**—मा दाव । होदीए दंसणमत्तेण अत्तभवं पणिवादलङ्घणं विसुमरिदो । होदी उण अज्जवि पसादं ण गेण्हइ ।

मा तावत् । भवत्या दर्शनमात्रेणात्रभवान्प्रणिपातलङ्घनं विस्मृतः । भवती पुनरद्यापि प्रसादं न गृह्णाति ।

**इरावती**—कुविदा वि दाणिं किं करिस्सं ।

कुपितापीदानीं किं करिष्यामि ।

**राजा**—[1]अस्थाने कोप इत्यनुपपन्नं त्वयि । तथा हि ।

कदा मुखं वरतनु कारणादृते
तवागतं क्षणमपि कोपपात्रताम् ।
अपर्वणि ग्रहकलुषेन्दुमण्डला
विभावरी कथय कथं भविष्यति ॥ १६ ॥

**इरावती**—अट्ठाणेत्ति सुठ्ठु वाहरिदं अज्जउत्तेण । अण्णसंकन्देसु अह्माणं भाअहेएसु जदि उण कुप्पेअं, तदो हस्सा भवेअं ।

अस्थान इति सुष्ठु व्याहृतमार्यपुत्रेण । अन्यसंक्रान्तेष्वस्माकं भागधेयेषु यदि पुनः कुप्येयम्, ततो हास्या भवेयम् ।

**राजा**— त्वमन्यथा कल्पयसि । अहं पुनः सत्यमेवात्र कोपस्थानं न पश्यामि । कुतः,

---

**कुपितापीति** ॥ **किं करिष्यामि** किमपि कर्तुं न पारयिष्यामीत्यर्थः । अस्थाने कुपितेति क्वचित्पाठः । राजा समावर्जयन्नाह—**अस्थान इति** ॥ अस्थाने असति कारणे । **कदेति** ॥ हे वरतनु । समावर्जनार्था संबुद्धिः । तव मुखं कारणादृते कारणं विना कदा क्षणमल्पकालमपि कोपपात्रताम् कोपस्य तदनुभावस्यारक्तत्वादेः पात्रमास्पदं तत्ताम् आगतं प्राप्तं, न कदापीत्यर्थः । अत्र दृष्टान्तमाह—**अपर्वेति** ॥ विभावरी रात्रिः अपर्वणि पर्वभिन्नकाले ग्रहेण उपरागेण हेतुना कलुषमिन्दुमण्डलं यस्यां तथाभूता कथं भविष्यति कथय नैव भविष्यतीत्यर्थः । यथा रात्रिः सुखायमानस्य चन्द्रस्य पर्वणा विना उपरागजनितं कालुष्यं न भवति तथा तव मुखस्य कारणेन केनचिद्विना कोपहेतुकमारक्तत्वादिकं न भवितुमर्हतीत्यर्थः । दृष्टान्तालङ्कारः । रुचिरा वृत्तम् । **अस्थान इति** ॥ सुष्ठूक्तमित्यत्र हेतुः—**अन्येत्यादि** ॥ **भागधेयेषु** सुखानुभवहेतुषु **अन्यसंक्रान्तेषु** अन्यजनं प्रविष्टेषु । यद्वा भागधेयत्वेन राज्ञोऽध्यवसायः । अन्यसंक्रान्तेषु अन्यजनासक्तेषु । **त्वमन्यथा कल्पयसीति** ॥ मामन्यसंक्रान्तहृदयं कल्पयसीत्यर्थः । यद्वा कारणाभावेन कोपस्यानुचितत्वं ममा-

---

1. अस्थाने कुपिता.

नार्हति कृतापराधोऽप्युत्सवदिवसेषु परिजनो दण्डम् ।
इति मोचिते मयैते प्रणिपतितुं मामुपगते च ॥ १७ ॥

**इरावती**—णिउणिए, गच्छ । देविं विण्णवेहि । दिट्ठं देवीए पक्खवाइत्तणं अज्जत्ति ।

निपुणिके, गच्छ देवीं विज्ञापय—दृष्टं देव्याः पक्षपातित्वमद्येति ।

**निपुणिका**—तह । तथा । (इति निष्क्रान्ता ।)

**विदूषकः**—(आत्मगतम्) अह्मो अणत्थो संवुत्तो । बन्धणब्भट्टो घरकवोदओ बिडालिआलोए पडिदो ।

अहो अनर्थः संवृत्तः । बन्धनभ्रष्टो गृहकपोतको बिडालिकालोके पतितः ।

(प्रविश्य)

**निपुणिका**—(अपवार्य) भट्टिणि, जदिच्छादिट्ठाए माहविआए आचक्खिदं एव्वं खु एदं णिव्वुत्तंति ।

भट्टिनि, यदृच्छादृष्टया माधविकयाख्यातम् । एवं खल्वेतन्निर्वृत्तमिति । (कर्णे कथयति ।)

**इरावती**—(आत्मगतम् ।) उववण्णं । सव्वं अअं एत्थ बह्मबन्धुणा उब्भिण्णो दुप्पओओ । (विदूषकं विलोक्य प्रकाशम् ।) इअं इमस्स कामतन्तसचिवस्स णीदी ।

---

नुमतं तव तु हास्यास्पदत्वेन अतोऽन्यथा कल्पयसीत्यर्थः । **नार्हतीति** ॥ उत्सवः वसन्तोत्सवः । दण्डं शासनं । बन्द्धुमिति च पाठः । इतीति हेतौ । इति मत्वेत्यर्थो वा । **एते** मालविका बकुलावली च । तर्हि किमर्थमत्रागते इत्यत्राह—**प्रणीति** ॥ देव्यनुमतिपूर्वकमेतयोः मोचनमिति मत्वा साक्षेपमाह— **निपुणिके इति** ॥ **गच्छ देवीं विज्ञापय** गत्वा देवीं विज्ञापयेत्यर्थः । **पक्षपातित्वं** मत्पक्षानुवृत्तिः । अत्र विपरीतलक्षणा । **अहो इति** ॥ बन्धनेत्यप्रस्तुतप्रशंसा । यथा बन्धनान्मुक्ता गृहकपोती मार्जार्या दर्शनविषयं प्राप्नोति तथा निगलान्मोचितेयमिरावत्या दृष्टिपथं प्राप्तेति भावः । **भट्टिनीत्यादि** ॥ सारभाण्डगृहे नियुक्ता हि माधविका । **कर्णे कथयतीति** ॥ विदूषकच्छद्मना एते मोचिते इति कथयतीति बोध्यम् । **ब्रह्मबन्धुना** दुष्टब्राह्मणेन **उद्भिन्नः** प्रकटीकृतः **दुष्प्रयोगः** कपटनाटकं भवतीति ।

---

१. बन्द्धुं. २. दिट्ठो भवदीए पक्खवादो णं अज्जत्ति ३. दृष्टो भवत्याः पक्षपातो नन्वद्येति ४. भो अणत्थो संपडिदो ५. भोः अनर्थः संपतितः ६. किदो पओओ.

उपपन्नम्। सत्यमयमत्र ब्रह्मबन्धुनोद्दिष्टो दुष्प्रयोगः। इयमस्य कामतन्त्रसचिवस्य नीतिः।

**विदूषकः**— २होदि, जइ णीदीए एक्कं वि अक्खरं पढेअं तदो णं ३गाअत्तिं वि विसुमरेअं।

४भवति, यदि नीत्या एकमप्यक्षरं पठेयम् ततो ननु गायत्रीमपि विस्मरेयम्।

**राजा**—(आत्मगतम्) कथं नु खल्वस्मात्संकटादात्मानं मोचयिष्यामि।

(प्रविश्य)

**जयसेना**—(सावेगम्) देव, कुमारी वसुलच्छी कन्दुअं अणुधावन्दी पिङ्गलवाणरेण बलिअं तासिदा अङ्कणिसण्णा देवीए पवादकिसलअं विअ वेवमाणा दाणिं वि ६पकिदिं ण पडिवज्जइ।

देव, कुमारी वसुलक्ष्मीः कन्दुकमनुधावन्ती पिङ्गलवानरेण बलवत्त्रासिताङ्कनिषण्णा देव्याः प्रवातकिसलयमिव वेपमानेदानीमपि प्रकृतिं न प्रतिपद्यते।

**राजा**—कष्टम्। कातरो बालभावः।

**इरावती**—(सावेगम्) तुवरदु तुवरदु अज्जउत्तो णं समासासिदुं। मा दाव से संतासजणिदो विआरो वड्ढदु।

त्वरतां त्वरतामार्यपुत्र एनां समाश्वासयितुम्। मा तावदस्याः संत्रासजनितो विकारो वर्धताम्।

---

**ततः** तर्हि **गायत्रीमपि विस्मरेयम्** गायत्रीविस्मरणमपि भवेत्। मयात्मा गोहत्यां प्रापितो भवेदिति क्वचित्पाठः। राज्ञा निरूपितायाः सङ्कटनिवृत्तेरुपायभूतं वृत्तं वर्णयिष्यन् जयसेनाप्रवेशमाह—**प्रविश्येति**॥ संभ्रमद्योतको ल्यबन्तेन प्रवेशक्रियानिर्देशः। **अनुधावन्ती** अनुसृत्य धावन्ती। पिङ्गल इति वानरस्य नाम। देव्या अङ्के निषण्णेत्यन्वयः। तच्छ्रवणजनितविषादद्योतकं—**कष्टमिति**। उक्ताया वसुलक्ष्म्यवस्थाया उपपत्तिमाह—**कातर इति**॥ इरावती च तदाकर्णनेन जनितसंभ्रमापगतकोपा चाह—**त्वरतामिति**॥ विकारः मूर्च्छारूपः मा वर्धतामित्य-

---

१. ब्रह्मबन्धुना कृतः प्रयोगः २. भोदि जदि णीदिगदं एक्कं वि अक्खरं पढेअं णं मए अत्तभवं पेसिदो हवे ३. मए अप्पा गोहच्चं पाविदो हवे ४. भवति यदि नीतिगतमेकमप्यक्षरं पठेयं ननु मयात्रभवान् प्रेषितो भवेत् ५. मयात्मा गोहत्यां प्रापितो भवेत् ६. ण किं वि पकिदिं पडिवज्जइ ७. वेपमाना न किंचित्प्रकृतिं प्रतिपद्यते.

**राजा**—अहमेनां संज्ञापयामि । (इति सत्वरं परिक्रामति ।)

**विदूषकः**—(आत्मगतम्) साहु रे पिङ्गलवाणर साहु । परित्तादो तुए सपक्खो ।

**साधु रे पिङ्गलवानर साधु । परित्रातस्त्वया सपक्षः ।**

(निष्क्रान्तो राजा विदूषकश्च इरावती निपुणिका प्रतीहारी च ।)

**मालविका**—हला, देविं चिन्तिअ वेवदि मे हिअअं । ण जाणे अदो वरं किं वा अणुहविदव्वं हविस्सदित्ति ।

**सखि, देवीं चिन्तयित्वा वेपते मे हृदयम् । न जानेऽतः परं किं वानुभवितव्यं भविष्यतीति ।**

(नेपथ्ये)

अच्चरिअं अच्चरिअं । अपुण्णे एव्व पञ्चरत्ते दोहलस्स मुउलेहिं संणद्धो तवणीआसोओ । जाव देवीए णिवेदेमि ।

**आश्चर्यमाश्चर्यम् । अपूर्ण एव पञ्चरात्रे दोहदस्य मुकुलैः संनद्धस्तपनीयाशोकः । यावद्देव्यै निवेदयामि ।**

(उभे श्रुत्वा प्रहृष्टे भवतः ।)

**बकुलावलिका**—आससिदु सही । सच्चप्पइण्णा देवी ।

**आश्वसितु सखी । सत्यप्रतिज्ञा देवी ।**

**मालविका**—तेण हि पमदवणपालिआए पिठ्ठदो होम्ह ।

**तेन हि प्रमदवनपालिकायाः पृष्ठतो भवावः ।**

**बकुलावलिका**—तह । तथा ।

(इति निष्क्रान्ताः सर्वे ।)

इति चतुर्थोऽङ्कः ॥

---

न्वयः । **संज्ञापयामीति** ॥ प्राप्तसंज्ञां करोमि प्रकृतिस्थां करोमीत्यर्थः । विदूषकस्तदा संतुष्टः स्वयं वानरं श्लाघते— **साध्विति** ॥ समानः पक्षः सपक्षः मत्पक्षीयो राजेत्यर्थः । यद्वा चापल्यात्त्वत्तुल्योऽहमित्यर्थः । उपहासोक्तिः । देवीं चिन्तयित्वेत्यादिना दर्शितस्य मालविकासङ्कटस्यापि निवृत्तेरुपायं दर्शयितुं नेपथ्यवचनमाह— **आश्चर्यमित्यादि** ॥ **दोहदस्य** मालविकाकृतस्येत्यर्थात् । पञ्चानां रात्रीणां समूहः पञ्चरात्रं तस्मिन् संनद्धः संपन्नः । **सत्यप्रतिज्ञा देवीति** ॥ अत्र देव्यनुग्रहकार्यस्य सग्रहणादादानं नामावमर्शसंधेरन्त्यमङ्गम् । **तेन हीति** ॥ इदं मालविकाकृतोद्यानपालिकानुसरणम् उत्तराङ्कोपयुक्तत्वाद्बिन्दुः ॥

॥ इति सारार्थदीपिकायां मालविकाग्निमित्रव्याख्यायां चतुर्थोऽङ्कः समाप्तः ॥

## पञ्चमोऽङ्कः ।

(ततः प्रविशत्युद्यानपालिका ।)

**उद्यानपालिका**—उवक्खित्तो मए किदसक्कारविहिणो तवणीआसोअस्स वेदिआबन्धो । जाव अणुट्ठिदणिओअं अत्ताणं देवीए णिवेदेमि । (परिक्रम्य) अहो देव्वस्स अणुकम्पणीआ मालविआ । जं तस्सिं तह चण्डीकिदा देवी इमिणा असोअकुसुमवुत्तन्तेण पसादसुमुही हविस्सदि । कहिं णु खु देवी हुवे । (विलोक्य) अह्मो, एसो देवीए परिअणब्भन्तरो किंवि जदुमुद्दालञ्छिदं [1]मञ्जूसिअं गेण्हिअ चदुस्सालादो कुज्जो सारसओ णिक्कामदि । पुच्छिस्सं दाव णं ।

उपक्षिप्तो मया कृतसत्कारविधेस्तपनीयाशोकस्य वेदिकाबन्धः । यावदनुष्ठितनियोगमात्मानं देव्यै निवेदयामि । अहो दैवस्यानुकम्पनीया मालविका । यत्तस्यां तथा चण्डीकृता देव्यनेनाशोककुसुमवृत्तान्तेन प्रसादसुमुखी भविष्यति । कुत्र नु खलु देवी भवेत् । अहो, एष देव्याः परिजनाभ्यन्तरः किमपि जतुमुद्रालाञ्छितां मञ्जूषिकां गृहीत्वा चतुःशालात् कुब्जः सारसको निष्क्रामति । प्रक्ष्यामि तावदेनम् ।

(ततः प्रविशति यथानिर्दिष्टः कुब्जः ।)

**उद्यानपालिका**— (उपसृत्य) सारसअ, कहिं पत्थिदोसि ।

सारसक, कुत्र प्रस्थितोऽसि ।

---

॥ अथ पञ्चमोऽङ्कः ॥

कथासङ्घटनार्थं प्रवेशकं प्रस्तौति—**तत इत्यादि** ॥ **उपक्षिप्तः** कृतः । कृतः सत्कारविधिः मालविकाचरणाघातरूपः संमार्जनादिरूपो वा यस्य । अनुष्ठितः नियोगः तपनीयाशोकस्य वेदिकाबन्धः क्रियतामिति दोहदनिर्वर्तनानन्तरो देव्या नियोगः येन तम् । **यावन्निवेदयामि** अनुष्ठितस्ते नियोग इति देवीं विज्ञापयिष्यामीत्यर्थः । मालविकावस्थां विचिन्त्याह—**अहो इति** ॥ अहो इति खेदे । **दैवस्यानुकम्पनीया मालविकेति** ॥ मालविकां प्रति दैवस्यानुकम्पाया अयं काल इत्यर्थः । अत्र हेतुमाह—**यदिति** ॥ तस्यां मालविकायां चण्डीकृता । इरावत्येति शेषः । **एष इति** ॥ **परिजनाभ्यन्तरः** आसन्नपरिचारकः । एष

---

1. चीवरबन्धं करे.

**सारसकः**—महुअरिए, वेअपारआणं बह्मणाणं णिच्चदक्खिणा दादव्वा । ता अज्जपुरोहिदस्स हत्थं पावइस्सं ।

मधुकरिके, वेदपारगाणां ब्राह्मणानां नित्यदक्षिणा दातव्या । तदार्यपुरोहितस्य हस्तं प्रापयिष्यामि ।

**मधुकरिका**—किंणिमित्तं । किंनिमित्तम् ।

**सारसकः**—जदा पहुदि सुदं सेणावइणा जण्णतुरगरक्खणे णिउत्तो भट्टिदारओ वसुमित्तोत्ति, तदा पहुदि तस्स आउसो णिमित्तं अट्टादस-सुवण्णपमाणं दक्खिणं देवी दक्खिणीएहिं पडिग्गाहेदि ।

यदाप्रभृति श्रुतं सेनापतिना यज्ञतुरगरक्षणे नियुक्तो भर्तृ-दारको वसुमित्र इति तदाप्रभृति तस्यायुषोनिमित्तमष्टा-दशसुवर्णप्रमाणां दक्षिणां देवी दक्षिणीयैः प्रतिग्राहयति ।

**मधुकरिका**—जुज्जइ । अह कहिं देवी । किं वा अणुचिट्ठदि ।

युज्यते । अथ कुत्र देवी । किं वानुतिष्ठति ।

**सारसकः**— मङ्गलघरे आसणत्था भविअ विदब्भविसआदो भादुणा वीरसेणेण पेसिदं लेहं लेहकरेहिं वाइअमाणं सुणादि ।

मङ्गलगृह आसनस्था भूत्वा विदर्भविषयाद्भ्रात्रा वीरसेनेन प्रेषितं लेखं लेखकरैर्वाच्यमानं शृणोति ।

**मधुकरिका**—को उण विदब्भराअवुत्तन्तो सुणीअदि ।

कः पुनर्विदर्भराजवृत्तान्तः श्रूयते ।

**सारसकः**—वसीकिदो किल वीरसेणप्पमुहेहिं भत्तुणो विजअ-दण्डेहिं विदब्भणाहो । मोइदो से दाआदो माहवसेणो । तेण महा-

---

सारसकः कुब्ज इत्यन्वयः । जतुनो लाक्षाया मुद्रया लाञ्छितां चिह्नितां मञ्जूषिकां पेटिकाम् । **मधुकरिके इति** ॥ नित्यदक्षिणा प्रतिदिनसङ्कल्पितदक्षिणा । **तदिति** ॥ तस्मादित्यर्थः । **प्रापयिष्यामि** । इमां पेटिकामिति शेषः । **किंनिमित्तमिति** ॥ नित्यदक्षिणादानमिति शेषः । **सेनापतिना** पुष्पमित्रेण । **यज्ञतुरगेति** ॥ पुष्पमित्रेण क्रियमाणो यो यज्ञः अश्वमेधः तत्संबन्धितुरगेत्यर्थः । **वसुमित्रः** अग्निमित्रस्य धारिण्यां संजातः पुत्रः । **आयुषो निमित्तमिति** ॥ आयुर्वृद्ध्यर्थमित्यर्थः । अष्टादशसुवर्णेत्यत्र निष्कशतसुवर्णेति क्वचित्पाठः । 'सुव-र्णहस्तौ हेम्नोऽक्ष' इत्यमरः । **दक्षिणीयैः** दक्षिणार्हैः । **मङ्गलगृह इति** ॥ देवकार्यादि यत्र स्थित्वा क्रियते तन्मङ्गलगृहम् । **विदर्भविषयात्** विदर्भदेशात् ।

---

१. विज्जाभरिआणं २. विद्याभरितानां ३ णिक्कसद. ४. निष्कशतसुवर्ण.

साराइ रअणाइ वाहणाइ सिप्पआरिआभूइट्ठं परिअणं अ उवाअणीकरिअ भट्टिणो सआसं पेसिदो दूदो सुवो किल भट्टारं पेक्खिस्सदि ।

वशीकृतः किल वीरसेनप्रमुखैर्भर्तुर्विजयदण्डैर्विदर्भनाथः । मोचितोऽस्य दायादो माधवसेनः । तेन महासाराणि रत्नानि वाहनानि शिल्पकारिकाभूयिष्ठं परिजनं चोपायनीकृत्य भर्तुः सकाशं प्रेषितो दूतः श्वः किल भर्तारं द्रक्ष्यति ।

मधुकरिका—गच्छ अणुचिट्ठ अत्तणो णिओअं । अहं वि देविं पेक्खिस्सं ।

गच्छ अनुतिष्ठात्मनो नियोगम् । अहमपि देवीं द्रक्ष्यामि ।

(इति निष्क्रान्तौ ।)

इति प्रवेशकः ॥

(ततः प्रविशति प्रतीहारी ।)

प्रतीहारी—आणत्तह्मि असोअसक्कारव्वावुदाए देवीए—विण्णवेहि अज्जउत्तं । इच्छामि अज्जउत्तेण सह असोअरुक्खस्स पसूणलच्छिं पच्चक्खीकादुंति । ता जाव धम्मासणगदं देवं पडिवालेमि ।

आज्ञप्तास्म्यशोकसत्कारव्यापृतया देव्या—विज्ञापय आर्यपुत्रम् । इच्छाम्यार्यपुत्रेण सहाशोकवृक्षस्य प्रसूनलक्ष्मीं प्रत्यक्षीकर्तुमिति । तद्यावद्धर्मासनगतं देवं प्रतिपालयामि ।

(इति परिक्रामति ।)

(नेपथ्ये)

वैतालिकौ—दिष्ट्या दण्डेनैवारिशिरःसु वर्तते देवः ।

प्रथमः—

परभृतकलव्याहारेषु त्वमात्तरतिर्मधुं
नयसि विदिशातीरोद्यानेष्वनङ्ग इवाङ्गवान् ।

---

**वशीकृतः** विजितः । **दायादः** बान्धवः । **तेन** माधवसेनेन । **महासाराणि** महान्ति साराणि श्रेष्ठानि च । शिल्पकारिकाः केशप्रसाधनादिशिल्पकारिण्यः भूयिष्ठाः प्रचुरा यस्मिन् । **परिजनं** परिचारकवर्गम् । **आज्ञप्तास्मीति** ॥ अशोकस्य सत्कारः संमानः तत्र व्यापृतया । प्रत्यक्षीकर्तुमिच्छामीति आर्यपुत्रं विज्ञापयेति आज्ञप्तास्मीति संबन्धः । **धर्मासनगतम्** इदानीं न्यायासनासीनं **प्रतिपालयामि** तस्मादागमनं प्रतीक्ष इत्यर्थः । अथ विदर्भराजविजयं धर्मासनादुत्थानस्यावसरं च राज्ञे बोधयितुं वैतालिकवचनमुपक्षिपति— **नेपथ्य इति** ॥

विजेयकरिणामालानत्वं गतैः प्रबलस्य ते
वरद वरदारोधोवृक्षैः सहावनतो रिपुः ॥ १ ॥

द्वितीयः—

विरचितपदं वीरप्रीत्या सुरोपम सूरिभि-
श्चरितमुभयोर्मध्येकृत्य स्थितं क्रथकैशिकान् ।
तव हृतवतो दण्डानीकैर्विदर्भपतेः श्रियं
परिघगुरुभिर्दोर्भिः शौरेः प्रसह्य च रुक्मिणीम् ॥ २ ॥

---

तत्र स्थित्वा पठत इत्यर्थः । 'वैतालिका बोधकरा' इत्यमरः । तयोरेकः तात्कालिकीं राज्ञः शृङ्गारानुगुणामवस्थां वीर्यातिशयकृतां रिपोरवस्थां च वर्णयति— **परभृतेति** ॥ अङ्गवाननङ्ग इवेत्युत्प्रेक्षा । त्वं परभृतानां कोकिलानां कला अव्यक्तमधुरा ये व्याहारा आलापाः तेषु । परभृतेत्यादिना वैतालिकवचनं विवक्षितमिति केचित् । **आत्तरतिः** कृतप्रीतिः । कोकिलानामनङ्गस्य वन्दित्वात् सोऽपि तथाभूतः । आत्ता रतिः स्वभार्या येनेति वा । विदिशाया नगर्याः तीरेषु प्रान्तेषु यानि उद्यानानि तेषु अधिकरणेषु **मधुं** वसन्तम् **नयसि** यापयसि । मधोरनङ्गसहायत्वात्तन्नयनमनङ्गस्यापि संभवति । यद्वा परभृतानां कला व्याहारा येषु तेषु विदिशातीरोद्यानेषु आत्तरतिः कृतरमणः मधुं नयसीत्यर्थः । त्वं कामोपभोगोन्मुखः तादृशोद्यानेषु स्वैरं चरसीत्यर्थः । अथ चात्तरतिः मालविकायां विषये धृतानुरागः तादृशेषु उद्यानेषु विनोदबुद्ध्या चरसीति प्रकृतार्थश्च गम्यते । रामगिर्याश्रमेष्वित्यत्रेव बहुवचनं विरहव्यथया एकत्रानवस्थितिद्योतकम् । किंच हे वरद अभीष्टद । संबुद्धिरियं यज्ञसेनमाधवसेनयोः भाविराज्यप्रदानं द्योतयति । **प्रबलस्य** प्रकृष्टसामर्थ्यस्य । हेतुगर्भमिदम् । ते तवेति रिपुः करिणामित्युभयत्र संबध्यते । **रिपुः** विदर्भराजो यज्ञसेनः । विजयकरिणां सेनाङ्गानां गजानाम् आलानं बन्धनस्तम्भः तत्त्वं गतैः । आलानाङ्कैरुपोढबलस्येति पाठे आलानं बन्धनमेव अङ्कश्चिह्नं येषां तैरित्यर्थः । वरदा नाम विदर्भविषयवर्तिनी नदी । तत्तीरे हि सेनानिवेशोऽभूत् । वरदायाः रोधसि तीरे ये वृक्षाः तैः सह **अवनतः** वशं गतः नम्रश्च । कामोपभोगोन्मुखे त्वयि स्वपुरोद्यानेषु स्वैरं वर्तमानेऽपि त्वत्सैनिकैरनायासेन विदर्भराजो जितः अहो ते प्रभाव इति भावः ॥ अत्रोत्प्रेक्षातिशयोक्तिसंकीर्णा सहोक्तिश्चालङ्कारः । शृङ्गारवीराभ्यां रसाभ्यामुपस्कृतो राजविषयकरतिभावः प्राधान्येन व्यङ्ग्यः । हरिणी वृत्तम् । अपरोऽपि विदर्भराजजयादिकं वर्णयन् स्तौति—**विरचितेति** ॥ हे **सुरोपम** देवतुल्य । वक्ष्यमाणार्थोपपादिकेयं संबुद्धिः । **दण्डानीकैः** रुक्मं स्वर्णं तत्प्रचुरा रुक्मिणी तां विदर्भपतेः श्रियं

---

१. विजयकरिणामालानाङ्कैरुपोढबलस्य ते.

प्रतीहारी—एसो जअसद्दसूइदप्पत्थाणो भट्टा इदो एव्व आअच्छदि। अहं वि दाव इमस्स पमुहादो किंवि ओसरिअ एदंमुहालिन्दतोरणं समस्सिदा होमि।

एष जयशब्दसूचितप्रस्थानो भर्तेत एवागच्छति। अहमपि तावदस्य प्रमुखात्किमप्यपसृत्य एतन्मुखालिन्दतोरणं समाश्रिता भवामि। (इत्येकान्ते स्थिता।)

(ततः प्रविशति सवयस्यो राजा।)

राजा—

कान्तां विचिन्त्य सुलभेतरसंप्रयोगां
श्रुत्वा विदर्भपतिमानमितं बलैश्च।
धाराभिरातप इवाभिहतं सरोजं
दुःखायते [१]मम मनः सुखमश्नुते च ॥ ३ ॥

---

राजलक्ष्मीं प्रसह्य हृतवतः तव। परिघैरिव गुरुभिः महद्भिः। इदं दण्डानीकैरित्यस्यापि विशेषणम्। दोर्भिः भुजैः। विष्णोश्चतुर्भुजत्वात् बहुवचनम्। विदर्भपतेः श्रियमवतीर्णां महालक्ष्मीं रुक्मिणीं प्रसह्य हृतवतः शौरेः श्रीकृष्णस्य च उभयोश्चरितं वीरप्रीत्या वीरजनविषयकप्रीत्या हेतुना यद्वा वीरेति संबुद्धिः श्रीहरणसामर्थ्योपपादिका प्रीत्या युवयोर्विषये बहुमत्या न तु धनलिप्सादिना हेतुना। अनेन विरचनस्य स्वतः प्रवृत्तत्वं द्योत्यते। सूरिभिः विद्वद्भिः कविभिः विरचितानि प्रथितानि पदानि सुबन्तादीनि श्लोकपादा वा यत्र तत् प्रबन्धसमर्पितमित्यर्थः। तथाभूतं सत् क्रथकैशिकान् विदर्भान् मध्येकृत्य मध्येपद इत्यादिना गतिसंज्ञायां कुगतीति समासः। स्थितं भवति न केवलं विदर्भेषु तान्परितोऽपि व्याप्तं भवतीत्यर्थः। अत्र दीपकमलङ्कारः। तेन राज्ञो भगवत्साम्यं गम्यते। भाविनी मालविकाप्राप्तिश्चानेन द्योत्यते। भावध्वनिः पूर्ववद्बोध्यः। **एष इति** ॥ जयशब्देन वैतालिकवचनेन सूचितं प्रस्थानमितोगमनं यस्य सः। एतन्मुखालिन्दस्य यस्तोरणः बहिर्द्वारः तम्। स्वावस्थां स्वयमनुसंदधाति— **कान्तेति** ॥ कान्तां काम्यमानां सुन्दरीं मालविकां सुलभेतरः संप्रयोगः संभोगो यस्याः ताम्। सुलभेतरशब्देन लभ्यत्वसंभावना द्योत्यते। विचिन्त्य। विदर्भपतिं बलैः सैन्यैः आनमितं नम्रीकृतं जितमिति यावत्। श्रुत्वा चेत्युभयं क्रमात् दुःखे सुखे च हेतुः। स्थितस्य मम मनः। च हृदयमिति च पाठः। आतपे स्थितं धाराभिः वृष्टिप्रपातैः हिमधाराभिर्वा अभिहतं साघातं सिक्तामिति पूर्ववत्क्रमाद्धेतू। सरोजं सरस्सम्बन्धि पद्ममिव दुःखायते दुःखमनुभवति। सुखादिभ्यः कर्तृवेदनायामिति क्यङ्। सुखमश्नुते उपभुनक्ति च। दुःखसुख-

---

१. च हृदय.

**विदूषकः**—जह अहं पेक्खामि तह एकन्दसुहिदो भवं हविस्सदि।
यथाहं पश्यामि तथा एकान्तसुखितो भवान्भविष्यति।

**राजा**—कथमिव।

**विदूषकः**—अज्ज किल देवीए धारिणीए पण्डिदकोसिई भणिदा। भअवदि, जइ तुमं पसाहणगव्वं वहेसि, ता दंसेहि मालविआए सरीरे वैदब्भं विवाहणेवच्छं ति। ताए वि सविसेसालंकिदा मालविआ। तत्तहोदी कदा वि पूरए भवदो मणोरहं।

अद्य किल देव्या धारिण्या पण्डितकौशिकी भणिता। भगवति, यदि त्वं प्रसाधनगर्वं वहसि, तद्दर्शय मालविकायाः शरीरे वैदर्भं विवाहनेपथ्यमिति। तयापि सविशेषालंकृता मालविका। तत्रभवती कदापि पूरयेद्भवतो मनोरथम्।

**राजा**—सखे, मदपेक्षानुवृत्त्या निवृत्तेर्ष्याया धारिण्याः पूर्वचरितैः संभाव्यमेतत्।

**प्रतीहारी**—(उपगम्य) जेदु भट्टा। देवी विण्णवेदि। तवणीआसोअस्स कुसुमसोहादंसणेण मह आरम्भो सफलीकरीअदुत्ति।

जयतु भर्ता। देवी विज्ञापयति। तपनीयाशोकस्य कुसुमशोभादर्शनेन ममारम्भः सफलीक्रियतामिति।

**राजा**—ननु तत्रैव देवी।

---

पदाभ्यां संकोचविकासावपि लक्ष्येते। काव्यलिङ्गमतिशयोक्तिमूलकोपमा यथासंख्यं चालङ्कारः। वसन्ततिलकं वृत्तम्। बीजवन्तो मुखाद्यर्था इत्यादिलक्षितो निर्वहणसंधिरस्मिन्नङ्के। अस्मिन् श्लोके मालविकानुरागरूपबीजानुसंधानात् संधिर्नामाङ्गम्। दुःखायत इत्यादि श्रुत्वाह— **यथेति** ॥ यथा येन प्रकारेण पश्याम्यहमुत्प्रेक्षे तथा स प्रकारः एकान्तसुखितः दुःखं विना सुखस्यैव भोक्ता भवानेकान्तसुखितो भविष्यतीत्यहमूह इत्यर्थः। **कथमिवेति** ॥ अत्र कार्यान्वेषणाद्विबोधो नामाङ्गम्। **अद्येति** ॥ प्रसाधनगर्वमलङ्करणाभिमानम्। **वैदर्भं** विदर्भविषयानुगुणं मालविकाया विदर्भविषयजातत्वसंभावनयेदमुक्तम्। अत्र कार्योपदर्शनात्पूर्वभावो नामाङ्गम्। **सख इति** ॥ मदपेक्षायाः मदिच्छायाः अनुवृत्त्या अनुसरणेन मदिच्छामनुसृत्येत्यर्थः। यानि पूर्वचरितानि तैः हेतुभिः निवृत्ता ईर्ष्या यस्याः तस्याः। मदिच्छानुवृत्त्येत्यस्यात्राप्यन्वयः। **एतत्** मन्मनोरथपूरणम्। राज्ञो विचारानुगुणं देवीविज्ञापनमवसरे प्रतीहारी निवेदयति— **जयत्वित्यादि** ॥ अथ किमित्यनुवादे। यथार्हेण उचितेन संमानेन सुखितमानन्दितम्। संमानोऽयं वीरसेनजयेनेति बोध्यम्

**प्रतीहारी**—अह इं । जहारुहसंमाणसुहिदं अन्देउरं विसज्जिअ मालविआपुरोएण अत्तणो परिअणेण सह देवं पडिवालेदि ।

अथ किम् । यथार्हसंमानसुखितमन्तःपुरं विसृज्य मालविकापुरोगेणात्मनः परिजनेन सह देवं प्रतिपालयति ।

**राजा**—(सहर्षं विदूषकं विलोक्य) जयसेने, गच्छाग्रतः ।

**प्रतीहारी**—इदो इदो देवो । इत इतो देवः । (इति परिक्रामति ।)

**विदूषकः**—(विलोक्य) भो वअस्स, किंचि परिवुत्तजोव्वणो विअ वसन्तो पमदवणे लक्खीअदि ।

भो वयस्य, किंचित्परिवृत्तयौवन इव वसन्तः प्रमदवने लक्ष्यते ।

**राजा**—यथाह भवान् ।

अग्रे विकीर्णकुरवकफलजाल[1]विभिद्यमानसहकारम् ।
परिणामाभिमुखमृतोरुत्सुकयति यौवनं चेतः ॥ ४ ॥

**विदूषकः**—(परिक्रम्य) अहो, अअं सो दिण्णणेवच्छो विअ कुसुमत्थवएहिं तवणीआसोओ । ओलोएदु भवं ।

अहो, अयं स दत्तनेपथ्य इव कुसुमस्तबकैस्तपनीयाशोकः । अवलोकयतु भवान् ।

**राजा**—स्थाने खल्वयं प्रसवमन्थरोऽभूत् । यदयमिदानीमनन्यसाधारणीं शोभामुद्वहति । पश्य ।

---

अन्तःपुरमन्तःपुरवर्तिनीः स्त्रियः । **सहर्षं विदूषकं विलोक्येति** ॥ मालविकापुरोगेणेत्युक्त्या स्वमनोरथपूरणार्थोऽयमारम्भः स्यादिति संभावनया हर्षः । अत एव विलोकनम् । **भो वयस्येति** ॥ परिवृत्तयौवनः अतिक्रान्ततारुण्यः । वसन्तस्य यौवनं नाम मध्यावस्था । **यथाहेति** ॥ यथाशब्दः प्रशंसायाम् । यथा तुल्यार्थमानयोः प्रशंसायामिति मेदिनी । भवदुक्तं साध्वित्यर्थः । **अग्र इति** ॥ अग्रे पुरोदेशे विकीर्णा इतस्ततः प्रसृताः कुरवकाः कुरवककुसुमानि यत्र तत् तथा फलजालैः विभिद्यमानाः उद्भिद्यमानाः सहकारा आम्रवृक्षाः यत्र तच्च । अत एव परिणामस्यावसानस्याभिमुखम् ऋतोः वसन्तस्य यौवनम् । चेतः जनस्य मनः । उत्सुकयति उद्दीपकत्वादुत्कण्ठितं करोति । अत्र कुरवकभिद्यमानसहकारमित्यत्र स्तनयोः नवार्पणस्य ऋतोर्यौवनमित्यत्र ऋतुमत्या नायिकाया यौवनस्य च समाधिः । तत्स्मरणमपि मदनोद्दीपकमिति बोध्यम् । काव्यलिङ्गमलङ्कारः । आर्या वृत्तम् । **अहो इति** ॥ सोऽयं तपनीयाशोकः कुसुमस्तबकैः दत्तं नेपथ्यं

---

१ जालकाभिद्यमान.

सर्वाशोकतरूणां प्रथमं सूचितवसन्तमासानाम्[1] ।
निर्वृत्तदोहदेऽस्मिन्संक्रान्तानीव कुसुमानि ॥ ५ ॥

**विदूषकः**—भो, वीसद्धो होहि । अह्मेसु संणिहिदेसु वि धारिणी पासपरिवट्टिणिं मालविअं अणुमण्णेदि ।

भोः, विस्रब्धो भव । अस्मासु संनिहितेष्वपि धारिणी पार्श्वपरिवर्तिनीं मालविकामनुमन्यते ।

**राजा**—(सहर्षम्) सखे, पश्य ।

मामियमभ्युत्तिष्ठति देवी विनयादनूत्थिता प्रियया ।
विस्तृतहस्तकमलया[2] नरेन्द्रलक्ष्म्या वसुमतीव ॥ ६ ॥

(ततः प्रविशति धारिणी मालविका परिव्राजिका विभवतश्च परिवारः ।)

**मालविका**—(आत्मगतम) जाणामि णिमित्तं कोदुआलंकारस्स । तह वि बिसिणीपत्तगदं[3] विअ सलिलं वेवदि मे हिअअं । अविअ दक्खिणेदरं वि णअणं बहुसो फुरदि ।

यस्मै स इवेत्युत्प्रेक्षायाम् । अनेनाशोकस्य राजसाम्यमपि ध्वनितम् ॥ **स्थान इति** ॥ अयमशोकः प्रसवे पुष्पोद्गमे विषये मन्थरः मन्दः त्वराशून्य इति यावत् अभूत् यत्तत्स्थाने खलु युक्तमेव । कुत इत्यत्राह—**यदिति** ॥ उक्तमुपपादयति—**सर्वेति** ॥ प्रथममादौ सूचितः पुष्पोद्गमनलिङ्गेन ज्ञापितः वसन्तमासो यैः । वसन्तविभवानामिति पाठे तु वसन्तस्य विभवः पुष्पसंपत्तिरित्यर्थः । तेषां सर्वाशोकतरूणां कुसुमानि निर्वृत्तं निष्पन्नं दोहदं मालविकापादाघातरूपं यस्य तस्मिन् अस्मिन् पुरोदृश्यमाने तपनीयाशोके संक्रान्तानि मिलितानि । इवेत्युत्प्रेक्षायाम् । अशोकान्तराणां पुष्पवैरळ्यादस्य च पुष्पातिशयादेवमुत्प्रेक्षितम् । आर्या वृत्तम् । सहर्षमाह—**भो इति** ॥ विस्रब्धः मनोरथपूरणे विश्वस्तः भव । अत्र हेतुमाह—**अस्मास्विति** ॥ मालविकामनुमन्यते तस्याः समीपावस्थानं न प्रतिषेधति । मालविकया सहोत्थानेन प्रत्युद्व्रजन्तीं देवीं विलोक्य सहर्षमाह—**सख इति** ॥ **मामिति** ॥ विस्तृतमञ्जलिबन्धनेन विस्तारं प्राप्तं हस्तकमलं कमलतुल्यहस्तो यस्याः । विस्तृतं विकसितं हस्ते कमलं यस्या इति लक्ष्मीपक्षे । पद्महस्ता लक्ष्मीरिति प्रसिद्धिः । तया प्रियया मालविकया । विनयादित्यस्यानूत्थिता उत्तिष्ठतीत्युभयत्र संबन्धः । अनूत्थिता पश्चादुत्थानेन संमानिता । अन्वासितमरुन्धत्येत्यादिवदस्य सकर्मकत्वं बोध्यम् । इयं देवी नरेन्द्रलक्ष्म्या राजश्रिया अनूत्थिता अनुगता वसुमती वसुन्धरा इव मामभ्युत्तिष्ठति प्रत्युद्गच्छति । मालविकानूत्थितधारिण्या राजल-

१. वसन्तविभवानाम् २. विस्मृतहस्तकमलया ३. पुष्करपत्तगदं.

जानामि निमित्तं कौतुकालंकारस्य । तथापि बिसिनीपत्रगतमिव सलिलं वेपते मे हृदयम् । अपि च दक्षिणेतरदपि मे नयनं बहुशः स्फुरति ।

विदूषकः—भो वअस्स, विवाहणेवच्छेण सविसेसं खु सोहदि मालविआ ।

भो वयस्य, विवाहनैपथ्येन सविशेषं खलु शोभते मालविका ।

राजा—पश्याम्याभरणालंकृतामेनाम् । यैषा

अनतिलम्बिदुकूलनिवासिनी
बहुभिराभरणैः प्रतिभाति मे ।
उडुगणैरुदयोन्मुखचन्द्रिका
गतहिमैरिव चैत्रविभावरी ॥ ७ ॥

देवी—(उपेत्य) जेदु अज्जउत्तो । जयत्वार्यपुत्रः ।

विदूषकः—वड्ढदु भोदी । वर्धतां भवती ।

परिव्राजिका—विजयतां देवः ।

राजा—भगवति, अभिवादये ।

परिव्राजिका—अभिमतसिद्धिरस्तु ।

देवी—(सस्मितम्) अज्जउत्त, एसो दे अह्मेहिं तरुणीजणसहाअस्स असोओ संकेदघरअं संकप्पिदो ।

---

क्ष्म्यनुगतवसुमतीत्वोत्प्रेक्षया धारिण्याः क्षमाशीलत्वादिकं मालविकायाः राजलक्ष्मीवदुपभोक्तव्यत्वादिकं च द्योत्यते । अनेन तल्लाभे राज्ञः औत्सुक्यातिशयश्च । वृत्तमार्या । **जानामीति** ॥ **कौतुकालङ्कारस्य** विवाहनेपथ्यस्य । बिसिनीपत्रं पद्मपत्रम् । पुष्करपत्रमिति च पाठः । दक्षिणेतरत् वामम् । स्त्रीणां हि वामनयनस्फुरणमभीष्टलाभसूचकम् । बहुश इत्यनेन स्फुरणस्याविच्छेदः तेन फलस्यात्यन्तासन्नता च द्योत्यते । विवाहनेपथ्योल्लासितां मालविकां विलोक्याह— **भो इति** ॥ सविशेषमाधिकं शोभते असंशयं नात्र संशयः । राजा सकौतुकमाह— **पश्यामीति** । **यैषा अनतीति** ॥ नातिलम्बत इत्यनतिलम्बि यद्दुकूलं क्षौमं तन्निवस्ते परिधत्त इति तथाभूता । **बहुभिः** लघुभिरिति च पाठः । आभरणैः उपलक्षिता यैषा मालविका । उदयोन्मुखी चन्द्रिका यस्यां सा । गतं हिमं तुहिनं प्रकाशप्रतिबन्धकं येषां तैः उडुगणैः नक्षत्रसमूहैः उपलक्षिता चैत्रस्य चैत्रमासस्य संबन्धिनी

---

१. पुष्करपत्रगतं  २. लघुभिराभरणैः  ३. हृतहिमैरिव.

आर्यपुत्र, एष तेऽस्माभिस्तरुणीजनसहायस्याशोकः संकेतगृहं संकल्पितः ।

**विदूषकः**—भो, आराहिओसि । भोः, आराधितोऽसि ।

**राजा**—(सव्रीडमशोकमभितः परिक्रामन् )

नायं देव्या भाजनत्वं न नेयः
सत्काराणामीदृशानामशोकः ।
यः सावज्ञो माधवश्रीनियोगे
पुष्पैः शंसत्यादरं त्वत्प्रयत्ने ॥ ८ ॥

**विदूषकः**—भो, वीसद्धो भविअ तुमं जोव्वणवदिं इमं पेक्ख । भोः, विस्रब्धो भूत्वा त्वं यौवनवतीमिमां पश्य ।

**देवी**—कं । काम् ।

**विदूषकः**—तवणीआसोअस्स कुसुमसोहम् । तपनीयाशोकस्य कुसुमशोभाम् ।

(सर्वे उपविशन्ति ।)

---

विभावरी रात्रिरिव मे प्रतिभातीत्युत्प्रेक्षा । विशिष्टोत्प्रेक्षायां क्षौमार्द्रानां चन्द्रिकादिसाम्यं गम्यं निमित्तम् । चैत्रविभावरीसाम्येन च नायिकायाः कामोत्सवनिदानत्वादिकं द्योत्यते । द्रुतविलम्बितं वृत्तम् । जयत्वित्याद्याचारः । **आर्यपुत्रेति** ॥ एषः **अशोकः** अशोकवेदिका । तरुणीजनः सहायो यस्य तस्य ते सङ्केतगृहं रमणस्थानं अस्माभिः कल्पितः निश्चित इति सामान्यतो बाह्यार्थः । त्वया हि पूर्वमयमेव मालविकया सह सङ्केतगृहं कृतः अतो मयापि मालविकासहायस्य तवायमेव सङ्केतगृहं संकल्पित इत्यान्तरार्थः । **भो इति** ॥ देव्येति शेषः । **आराधितः** संतोषितः । **सव्रीडमिति** ॥ देवीवचनाद्व्रीडा । तस्या अनुभावः परिक्रमणम् । लज्जयात्मप्रीतिं गोपयन्नशोकं प्रति देव्याः प्रवृत्तिं श्लाघमान आह— **नायमिति** ॥ अयमशोकः देव्याः ईदृशानां सङ्केतकरणादिरूपाणां सत्काराणां भाजनत्वं पात्रतां न नेयः न प्रापणीयः न, नेय एवेत्यर्थः । कुत इत्यत्राह— **य इति** ॥ यः अशोकः माधवश्रियः वसन्तलक्ष्म्याः । कर्तरि षष्ठी । यो नियोगः वृक्षान्प्रति पुष्पोद्गमादेशः तस्मिन्विषये सावज्ञः कृतानादरः सन् त्वत्प्रयत्ने दोहदपूरणेन पुष्पोत्पादनरूपे तव प्रयत्ने विषये आदरं पुष्पैः करणैः शंसति बोधयतीत्यतिशयोक्तिः । गम्योत्प्रेक्षा वा । य आत्मानं संमानयति तस्यात्मनाऽवश्यं संमाननीयत्वात् त्वत्प्रयत्ने आदरसूचकस्याशोकस्य त्वयाप्यादरोऽवश्यं कर्तव्य इति भावः । अत्र माधवलक्ष्म्या नायिकात्वं देव्यास्तत उत्कर्षश्च गम्यते । काव्यलिङ्गं चालङ्कारः । शालिनी वृत्तम् । नर्मवचनमाह— **भो इति** ॥ **विस्रब्धः** विशङ्कः । **इमां यौवनवतीमिति** वचनं

**राजा**—(मालविकां विलोक्य । आत्मगतम् ।) कष्टः खलु संनिधिवि-प्रयोगः ।

> अहं रथाङ्गनामेव प्रिया सहचरीव मे ।
> अननुज्ञातसंपर्का धारिणी रजनीव नौ ॥ ९ ॥

(प्रविश्य)

**कञ्चुकी**—जयतु देवः । अमात्यो विज्ञापयति । तस्मिन्विदर्भराजो[1]-पायने द्वे शिल्पदारिके[2] मार्गपरिश्रमादलसशरीरे[3] इति पूर्वं न प्रवेशिते । संप्रति देवोपस्थानयोग्ये । तत्राज्ञां देवो दातुमर्हतीति ।

**राजा**—प्रवेशय ते ।

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रम्य ताभ्यां सह प्रविश्य) इत इतो भवत्यौ ।

**प्रथमा**—(जनान्तिकम्) हला रअणिए, अपुव्वंवि एदं राअउलं पविसन्दीए पसीदइ मे अब्भन्दरगदो अप्पा ।

हला रजनिके[6] अपूर्वमप्येतद्राजकुलं प्रविशन्त्याः प्रसीदति ममाभ्यन्तरगत आत्मा ।

**द्वितीया**—जोसिणिए, मह वि एव्वं । अत्थि खु लोअवाओ । आआमि सुहं वा दुक्खं वा हिअअसमवत्था कहेदित्ति ।

ज्योत्स्निके, ममाप्येवम् । अस्ति खलु लोकवादः । आगामि सुखं वा दुःखं वा हृदयसमवस्था कथयतीति ।

---

मालविकाभिप्रायकमित्यवगच्छन्ती देवी पृच्छति— **कामिति** ॥ स्ववचनमन्यथापयति— **तपनीयेति** ॥ मालविकादर्शनेनोद्दीपितमदनो विरहदुःखमसहमानः स्वयमाह— **कष्ट इति** ॥ संनिधौ सामीप्ये सत्यपि विप्रयोगः विघटना कष्टः खलु दुःखकर एव । विघटने हेतुमाह— **अहमिति** ॥ रथाङ्गनामा चक्रवाकः । सहचरी चक्रवाकी । नौ आवयोः । अस्य संपर्केत्यनेन संबन्धः । **अननुज्ञातेति** ॥ सामान्यधर्मोक्तिः । अत्र सावयवोपमा । उपमया भविष्यत्संपर्को द्योत्यते । पथ्यावक्त्रं वृत्तम् । **जयत्वित्यादि** ॥ तस्मिन्नित्यादिना अमात्यविज्ञापनानुवादः । तस्मिन्निति दूतद्वारा प्रेषित इत्यर्थः । प्रवेशकेऽस्य प्रसङ्गः । **उपायने** उपायनघटके **शिल्पदारिके** शिल्पवत्यौ स्त्रियौ । शिल्पकारिके इति च पाठः । अलसमालस्ययुक्तं शरीरं ययोस्ते । इतीति हेतौ । देवस्य भवतः उपस्थानं समीपगमनम् तस्य योग्ये

---

१. विदर्भविषयोपायने २. कारिके ३. अलघुशरे ४. मदणिए ५. हिअअं ६. मदनिके ७. हृदयं.

प्रथमा—सो दाणिं सच्चो होदु । स इदानीं सत्यो भवतु ।

कञ्चुकी—एष देव्या सह देवस्तिष्ठति । उपसर्पतां भवत्यौ ।

(उभे उपसर्पतः ।)

(मालविका परिव्राजिका च चेट्यौ दृष्ट्वा परस्परमवलोकयतः ।)

उभे—(प्रणिपत्य) जेदु भट्टा । जेदु भट्टिणी ।

जयतु भर्ता । जयतु भट्टिनी ।

राजा—निषीदतम् । (उभे उपविष्टे ।)

राजा—कस्यां कलायामभिविनीते भवत्यौ ।

उभे—भट्टा, संगीदे अब्भन्दरह्म ।

भर्तः, संगीतेऽभ्यन्तरे स्वः ।

राजा—देवि गृह्यतामनयोरन्यतरा ।

देवी—मालविए, इदो पेक्ख । कदरा ते संगीदसहाइणी[1] रुच्चइ ।

मालविके, इतः पश्य । कतरा ते संगीतसहायिनी[2] रोचते ।

उभे—(मालविकां दृष्ट्वा) अह्मो भट्टिदारिआ । (इति प्रणम्य) जेदु जेदु भट्टिदारिआ । (तया सह बाष्पं विसृजतः ।)

अहो भर्तृदारिका । जयतु जयतु भर्तृदारिका ।

(सर्वे सविस्मयमवलोकयन्ति ।)

राजा—के भवत्यौ । का वेयम् ।

उभे—भट्टा, एसा अह्माणं भट्टिदारिआ ।

भर्तः, एषास्माकं भर्तृदारिका ।

राजा—कथमिव ।

उभे—सुणादु भट्टा । जो सो भट्टिणा विजअदण्डेहिं विदब्भणाहं वसीकरिअ बन्धणादो मोइओ कुमारो माहवसेणो णाम, तस्स इअं कणीअसी भइणी मालविआ णाम ।

---

आलस्यनिवृत्तेरिति भावः । तत्रेति ॥ देवोपस्थान इत्यर्थः । अपूर्वमपीति ॥ अपूर्वं नवीनमपरिचितमिति यावत् । आत्मा मनः । लोकवादमाह—आगामीति ॥ हृदयस्य समवस्था अवस्था कथयति सूचयति । स इति । लोकवाद इत्यर्थः । मालविका परिव्राजिका च चेट्यौ दृष्ट्वा परस्परमवलोकयत इति ॥ परिचिते इव इमे प्रतिभातः इत्यभिप्रायकं परस्परविलोकनम् ॥ अभिविनीते

---

१. सहआरिणी २. सहचारिणी.

श्रृणोतु भर्ता । यः स भर्त्रा विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान्मोचितः कुमारो माधवसेनो नाम तस्येयं कनीयसी भगिनी मालविका नाम ।

देवी—कहं राअदारिआ इअं । चन्दणं खु मए पादुओवओएण दूसिदं ।

कथं राजदारिकेयम् । चन्दनं खलु मया पादुकोपयोगेन दूषितम् ।

राजा—अथात्रभवती कथमित्थंभूता ।

मालविका—(निःश्वस्य । आत्मगतम्) विहिणो णिओएण । विधेर्नियोगेन ।

द्वितीया—सुणादु भट्टा । दाआदवसंगदे अह्माणं भट्टिदारए माहवसेणे तस्स अमच्चेण अज्जसुमदिणा अह्मारिसं परिअणं उज्झिअ गूढं अवणीदा एसा ।

श्रृणोतु भर्ता । दायादवशंगतेऽस्माकं भर्तृदारके माधवसेने तस्यामात्येनार्यसुमतिनास्मादृशं परिजनमुज्झित्वा गूढमपनीतैषा ।

राजा—श्रुतपूर्वं मयैतावत् । ततस्ततः ।

उभे—[1]अदो वरं ण आणीमो । अतः परं न जानीवः ।

परिव्राजिका—ततः परमहं मन्दभागिनी कथयिष्यामि ।

उभे—अज्जकोसिईए विअ सरसंजोओ ।

आर्यकौशिक्या इव स्वरसंयोगः ।

मालविका—[2]अह इं । अथ किम् ।

शिक्षिते । **मालविके इति** ॥ ते रोचत इति संबन्धः । **कथमित्यादि** ॥ कथमिति विषादद्योतकम् । **चन्दनमिति** ॥ चन्दनवृक्षखण्डमित्यर्थः । पादुकाया उपयोगः पादुकोपयोगः । तेन पादुकीकृत्येत्यर्थः । **दूषितमिति** ॥ माननीयेयं परिचारिकाकरणेनावमानितेत्यर्थः । अत्र ललितमलङ्कारः । **विधेर्नियोगेनेति** ॥ इत्थंभूता इत्यस्यानुषङ्गः । कथमित्थंभूतेति राज्ञः प्रश्नस्योत्तरमाह—**श्रृणोत्विति** ॥ **दायादवशमिति** ॥ दायादो बान्धवो यज्ञसेनः तस्य वशमधीनत्वम् । **तस्य** माधवसेनस्य । सुमतिरिति नाम । **अतः परं न जानीव इति** ॥ एतावदेव जानीव इति क्वचित्पाठः । **स्वरसंयोगः** स्वरघटना । **अथ किमिति** ॥ ननु सा इयमेवेति

१. एत्तिअं एव्व जाणीमो । एतावदेव जानीवः २. णं सा एव्व । ननु सैव.

उभे—जदिवेसधारिणी अज्जकोसिई दुक्खेण विभावीअदि । भअवदि, वन्दामो ।

यतिवेषधारिण्यार्यकौशिकी दुःखेन विभाव्यते । भगवति, वन्दावहे ।

परिव्राजिका—स्वस्ति भवतीभ्याम् ।

राजा—कथमाप्तवर्गोऽयं भगवत्याः ।

परिव्राजिका—एवमेतत् ।

विदूषकः—तेण हि कहेदु भअवदी अत्तहोदीए उत्तन्दसेसं ।

तेन हि कथयतु भगवत्यत्रभवत्या वृत्तान्तशेषम् ।

परिव्राजिका—(सवैक्लव्यम् ।) तावच्छ्रूयताम् । माधवसेनसचिवं सुमतिं ममाग्रजमवगच्छ ।

राजा—उपलब्धम् । ततस्ततः ।

परिव्राजिका—स इमां तथागतभ्रातृकां मया सार्धमपवाह्य भवत्संबन्धाकाङ्क्षया पथिकसार्थं विदिशागामिनमनुप्रविष्टः ।

राजा—ततस्ततः ।

परिव्राजिका—स चाटव्यन्तरे निविष्टो गताध्वा वणिग्जनः ।

राजा—ततस्ततः ।

परिव्राजिका—ततश्च

तूणीरपट्टपरिणद्धभुजान्तराल-
मापार्ष्णिलम्बिशिखिबर्हकलापधारि ।
कोदण्डपाणि निनदत्प्रतिरोधकाना-
मापातदुष्प्रसहमाविरभूदनीकम् ॥ १० ॥

---

क्वचित्पाठः । **दुःखेन विभाव्यत इति** ॥ सुखेन प्रतिभातीति क्वचित्पाठः । **स इत्यादि** ॥ सः सुमतिः तथागतः तथाभूतः वैदर्भेण निगृहीत इति यावत् भ्राता माधवसेनो यस्यास्ताम् । अपवाह्य गूढं किंचन स्थलं प्रापय्य । भवत्संम्बन्धे आकाङ्क्षया तात्पर्येण । विदिशां गच्छतीति तथाभूतम् । **स चेति** ॥ सः पथिकः अटव्यन्तरे वनमध्ये गताध्वा किंचिदतिक्रान्तमार्गः । **तूणीरेति** ॥ तूणीराणामिषुधीनां पट्टः

---

१. मुहेण पडिभादि २. मुखेन प्रतिभाति ३. उत्तन्दं असेसं ४. वृत्तान्तमशेषं ५. तूणीरबन्ध ६. परिबद्ध ७. कर्ण.

(मालविका भयं रूपयति ।)

**विदूषकः**—भोदि, मा भआहि । अदिक्कन्तं खु तत्तहोदी कहेदि ।

भवति, मा बिभेहि । अतिक्रान्तं खलु तत्रभवती कथयति ।

**राजा**—ततस्ततः ।

**परिव्राजिका**—ततो मुहूर्तं बद्धयुद्धास्ते पराङ्मुखीकृताः सार्थवाहयोद्धारस्तस्करैः[1] ।

**राजा**—भगवति, अतः परमिदानीं कष्टं श्रोतव्यम् ।

**परिव्राजिका**—ततः स मत्सोदर्यः

इमां परीप्सुर्दुर्जाते पराभिभवकातराम् ।
भर्तृप्रियः प्रियैर्भर्तुरानृण्यमसुभिर्गतः ॥ ११ ॥

**प्रथमा**—हा, हदो सुमदी । हा, हतः सुमतिः ।

**द्वितीया**—अदो खु भट्टिदारिआए इअं समवत्था संवुत्ता ।

अतः खलु भर्तृदारिकाया इयं समवस्था संवृत्ता ।

(परिव्राजिका बाष्पं विसृजति ।)

**राजा**—भगवति, तनुत्यजामीदृशी लोकयात्रा । न शोच्यस्तत्रभवान्सफलीकृतभर्तृपिण्डः । ततस्ततः ।

---

बन्धननद्धीभिः परिणद्धानि व्याप्तानि भुजानामन्तरालानि मध्यभागा यस्य तत् । तूणीरबन्धेति च पाठः । तथा आपार्ष्णि पार्ष्णि गुल्फाधस्तनं चरणपश्चाद्भागं मर्यादीकृत्य लम्बत इति तथाभूतस्य शिखिबर्हाणां मयूरपिञ्छानां कलापस्य समूहस्य धारि । आकर्णलम्बीति क्वचित्पाठः । कोदण्डानि धनूंषि पाणिषु यस्य तत् । निनदत् सिंहनादं कुर्वत् आपातेन ईषत्संयोगेनापि दुष्प्रसहं दुःखेन सोढुं शक्यम् । अत्यन्तसंयोगे तु कृच्छ्रं किमु वक्तव्यमिति भावः । प्रतिरोधकानामाटविकानां चोरविशेषाणां अनीकं सैन्यमाविरभूत् अस्माकं पुरः प्रादुर्भूतम् । अत्र स्वभावोक्तिः । वृत्तं वसन्ततिलकम् । **तत इति** ॥ सार्थवाहा वणिजः ते एव योद्धारः तस्करैः पराङ्मुखीकृता इति संबन्धः । ते युद्धात्प्रतिनिवृत्ता इत्यर्थः । **इमामिति** ॥ दुर्जाते तस्मिन् युद्धरूपे व्यसने परेषामभिभवः आक्रमणं तस्मात्कातरां भीतामिमां मालविकां परीप्सुः पर्याप्तुं प्राप्तुमिच्छुः । **भर्तृप्रियः** भर्ता प्रियो यस्य सः यद्वा भर्तुः स्वस्वामिनो राज्ञः प्रियः स मत्सोदर्यः प्रियैः असुभिः प्राणैः भर्तुरानृण्यं गतः प्राप्तः । आत्मनः पालनरूपं भर्तृप्रयुक्तमृणमात्मप्राणनाशावधि तदीयामिमां पालयन्निर्यातयदित्यर्थः । मृत इत्यर्थस्य भङ्ग्यन्तरेण कथनात्पर्यायोक्तं काव्यलिङ्गं च ।

---

1. बद्धायुधास्ते.

परिव्राजिका—ततोऽहं मोहमुपगता यावत्संज्ञां लभे, तावदियं दुर्लभदर्शना संवृत्ता ।

राजा—महत्खलु कृच्छ्रमनुभूतं भगवत्या ।

परिव्राजिका—ततो भ्रातुः शरीरमग्निसात्कृत्य पुनर्नवीकृतवैधव्यदुःखया मया त्वदीयं देशमवतीर्य इमे काषाये गृहीते ।

राजा—युक्तम् । सज्जनस्यैष पन्थाः । ततस्ततः ।

परिव्राजिका—सेयमाटविकेभ्यो वीरसेनं वीरसेनाच्च देवीं गता, देवीगृहे लब्धप्रवेशया मया पुनर्दृष्टेत्येतदवसानं कथायाः ।

मालविका—(आत्मगतम्) किं णु खु संपदं भट्टा भणादि ।
किं नु खलु सांप्रतं भर्ता भणति ।

राजा—अहो परिभवोपहारिणो विनिपाताः । कुतः ।

प्रेष्यभावेन नामेयं देवीशब्दक्षमा सती ।
स्नानीयवस्त्रक्रियया पत्त्रोर्णं[1] वोपयुज्यते ॥ १२ ॥

पथ्यावक्त्रं वृत्तम् । कौशिकीमाश्वासयितुमाह— **भगवतीति** ॥ तनुं त्यजन्तीति तनुत्यजः तेषामवश्यंभाविमरणानां मनुजानाम् ईदृशी त्वद्भ्रातुरिव लोकयात्रा लोकस्थितिः । अत इत्यर्थात् । सफलीकृतमात्मकृतया सेवया सफलं कृतं भर्तुः स्वामिनः पिण्डं तत्प्रदत्तं जीवनं येन स इति च न शोच्य इत्यत्र हेतुः । **संज्ञां** चेतनाम् । दुर्लभं दर्शनं यस्याः सा । **तत इति** ॥ **भ्रातुः** सुमतेः । **अग्निसात्कृत्य** अग्न्यधीनं कृत्वा अग्निना संयोज्येत्यर्थः । नवीकृतं वैधव्य दुःखं यस्यास्तया । पूर्वमेव वैधव्यजनितं दुःखमासीत् तत्पुनः भ्रातृमरणेन प्रवृद्धमिति तस्य नवीभावः । कषायेण वर्णविशेषेण रञ्जिते वाससी काषाये । काषायग्रहणं श्लाघते—**युक्तमिति** ॥ तदिति शेषः । काषायग्रहणं युक्तमित्यर्थः । उक्तमुपपादयति—**सज्जनस्येति** ॥ **सेयमिति** ॥ वीरसेनमित्यत्रापि गतेत्यस्य सबन्धः । किंनु खल्विति वितर्के । अत्र शङ्कादयो भावाः । **अहो इति** ॥ अहो इति विस्मये दुःखे वा । जनस्येति शेषः । विनिपाता आपदः परिभवे विपदि उपहरन्त्युपतिष्ठन्ते यद्वा परिभवमुपहरन्ति उपनयन्ति तथाभूताः । आपदापदमनुबध्नातीत्यर्थः । यद्वा विनिपाताः स्थानभ्रंशाः परिभवमवमानं मानहानिमिति यावत् उपहरन्ति उपनयन्तीति तथा । उक्तं सामान्यं मालविकावृत्तान्तेन विशेषेण समर्थयति—**प्रेष्येति** ॥ सती कुलेन सौन्दर्यादिगुणैश्च प्रशस्ता अत एव देवीशब्दस्य क्षमा योग्या । देवी कृताभिषेकायामि—त्यमरः । इयं मालविका प्रेष्यभावेन परिचारिकाभावेन । नामेति कुत्सने । कुत्सितेन

१. पत्त्रोर्णं वोपयुज्यते.

**देवी**— भअवदि, तुए अभिजणवदिं मालविअं अणाचिक्खन्दीए असंपदं किदम् ।

भगवति, त्वयाभिजनवतीं मालविकामनाचक्षाणयाऽसांप्रतं कृतम् ।

**परिव्राजिका**—शान्तं पापम् । कारणेनैव खलु मया नैभृत्यमवलम्बितम् ।

**देवी**—किं विअ तं कारणम् । किमिव तत्कारणम् ।

**परिव्राजिका**—श्रूयताम् । इयं पितरि जीवति केनापि दे[1]वयात्रागतेन सिद्धादेशेन साधुना मत्समक्षं समादिष्टा । संवत्सरमात्रमियं प्रेष्यभावमनुभूय ततः सदृशभर्तृगामिनी भविष्यतीति । तमेनमवश्यंभाविनमादेशमस्या देवीपा[2]दशुश्रूषया परिणमन्तमवेक्ष्य कालप्रतीक्षया मया साधु कृतमिति पश्यामि ।

**राजा**—[3]युक्तोपेक्षा ।

---

प्रेष्यभावेनेत्यर्थः । उपमामाह—**स्नानीयेति** ॥ स्नात्यनेन स्नानीयं स्नानोपयोगि यद्वस्त्रं तस्य क्रिया शरीरप्रोक्षणादिकर्म अभ्यङ्गस्नाने परिधानं वा । **पत्रोर्णा** धौतकौशेयवस्त्रम् । यद्यपि पत्रोर्णं धौतकौशेयमित्यादिवचनात् पत्रोर्णशब्दो नपुंसकः तथापि 'स्त्री स्यात्काचिन्मृणाल्यादिः विपक्षापचये यदि' इति वचनादल्पत्वविवक्षयात्र स्त्रीत्वं बोध्यम् । इवेत्युपमायाम् । पत्रोर्णं वेति बहुषु पुस्तकेषु पाठः । तत्पक्षे इवार्थे वाशब्दः । **उपयुज्यते** अस्माभिरिति शेषः । यथा उत्सवकालमात्रोपयोग्यं पत्रोर्णं स्नानवस्त्रं क्रियते तथा देवीत्वमात्रयोग्येयं परिचारिका कृतेत्यर्थः । अनुचितमेतदिति भावः । अनेनानुचितकारित्वेन स्वनिन्दा च गम्यते । पथ्यावक्त्रं वृत्तम् । **भगवतीति** ॥ मालविकामभिजनवतीं कुलीनाम् अनाचक्षाणया अकथयन्त्येति हेतुगर्भम् । असांप्रतमयुक्तम् । **शान्तं पापमिति** ॥ परोक्तस्यानङ्गीकारे आत्मनोऽनभीष्टे च वचने शान्तं पापमिति प्रयुज्यते । शान्तमित्यत्र 'आशंसायां भूतवच्च' इति क्तः । अकथनेन संभावितं यत्पापं तस्य शमो भवत्वित्यर्थः । **नैभृत्यं** मूकत्वमकथनमिति यावत् । **श्रूयतामिति** ॥ देवयात्रा देवोत्सवः तत्रागतेन । लोकयात्रेति पाठे लोकयात्रा लोकसंचारः तेन हेतुना आगतेनेत्यर्थः । सिद्धः सफलः आदेशो यस्य । यद्वा सिद्धं निष्पन्नमवश्यंभावीति यावत् इतिवृत्तमादिशतीति तथाभूतेन साधुना सत्पुरुषेण । आदेशप्रकारमाह—**संवत्सरेत्यादि** ॥ **देवीपादशुश्रूषयेति** ॥ त्वत्पादेति क्वचित्पाठः । कालस्य वत्सरान्तस्य प्रतीक्षया मया कृतं साध्विति पश्यामीति संबन्धः । राजानुमोदते—**युक्तेति** ॥ उपेक्षा अकथन-

---

१. लोकयात्रागतेन २. त्वत्पादशुश्रूषया ३. युक्ता प्रतीक्षा.

(प्रविश्य)

कञ्चुकी—देव, कथान्तरेणान्तरितमिदममात्यो विज्ञापयति । विदर्भगतमनुष्ठेयमवधारितमस्माभिः । देवस्य तावदभिप्रायं श्रोतुमिच्छामीति ।

राजा—मौद्गल्य, तत्रभवतोर्भ्रात्रोर्यज्ञसेनमाधवसेनयोर्द्वैराज्यमिदानीमवस्थापयितुकामोऽस्मि ।

तौ पृथग्वरदाकूले शिष्टामुत्तरदक्षिणे ।
नक्तंदिवं विभज्योभौ शीतोष्णकिरणाविव ॥ १३ ॥

कञ्चुकी—देव, एवममात्यपरिषदे निवेदयामि ।

(राजाङ्गुल्यानुमन्यते । निष्क्रान्तः कञ्चुकी ।)

प्रथमा—(जनान्तिकम् ।) भट्टिदारिए, दिट्ठिआ भट्टिदारओ अद्धरज्जे पडिट्ठं गामिस्सदि ।

भर्तृदारिके, दिष्ट्या भर्तृदारकोऽर्धराज्ये प्रतिष्ठां गमिष्यति ।

मालविका—एत्तिएं दाव बहु मन्दव्वं, जं जीविदसंसआदो मुत्तो ।

एतावत्तावद्बहुमन्तव्यम्, यज्जीवितसंशयान्मुक्तः ।

---

रूपा । प्रतीक्षेति क्वचित्पाठः । कालप्रतीक्षेत्यर्थः । अथ मालविकायाः प्रीतिजनकं राज्ञः औदार्यं दर्शयितुं वृत्तान्तान्तरमुपक्षिपति—**प्रविश्येत्यादि** ॥ कथान्तरेण अन्यया कथया अन्तरितमाच्छादितम् । कार्यान्तराणां मध्ये निवेदयितुं विस्मृतमित्यर्थः । **इदं** वक्ष्यमाणम् । **विदर्भगतं** विदर्भविषयसंबन्धि । कथान्तरेणान्तरितमित्यस्यान्यकथाप्रसक्तं भवन्तमित्यर्थ इति केचित् । **अवधारितं** निश्चितम् । **मौद्गल्येति** कञ्चुकिनो नाम । द्वयोः राज्ञोर्भावः कर्म वा द्वैराज्यं द्वेधा राज्यविभागमित्यर्थः । **ताविति** ॥ शीतोष्णकिरणौ चन्द्रसूर्यावुभौ नक्तंदिनं रात्रिदिने इव तावुभौ यज्ञसेनमाधवसेनौ उत्तरदक्षिणे वरदयाः नद्याः कूले तीरे विभज्य वरदोत्तरदक्षिणतटोपलक्षितौ देशौ विभज्येत्यर्थः । **पृथक्** असंभिन्नम् **शिष्टां** शासनेन रक्षताम् । वरदां सीमां कृत्वा तस्या उत्तरे दक्षिणे च देशे क्रमेण विभक्तं यज्ञसेनमाधवसेनयोः राज्यमस्त्विति मदभिप्राय इति भावः । अत्रोपमया विभज्य पृथक्छासने तयोः सामर्थ्यं द्योत्यते । पथ्यावक्त्रं वृत्तम् । **एतावदिति** ॥ एतदिति च पाठः । वक्ष्यमाणमित्यर्थः । तावदादौ । बहुमन्तव्यमभिनन्दनीयम् । इदमुद्दिश्याभिनन्दनमाद्यं कर्तव्यमित्यर्थः । किमित्यत्राह—**यदिति** ॥ भर्तृदारक इति शेषः । माधवसेन इत्यर्थः । **जीवितसंशयात्** यज्ञसेनदायादोत्पादिताज्जीवित-

---

१. एदं २. एतत्

(प्रविश्य)

**कञ्चुकी**—विजयतां देवः। अमात्यो विज्ञापयति। अहो कल्याणी देवस्य बुद्धिः। मन्त्रिपरिषदोऽप्येवमेव दर्शनम्। कुतः।

द्विधा विभक्तां श्रियमुद्वहन्तौ
धुरं रथाश्वाविव संग्रहीतुः।
तौ स्थास्यतस्ते नृपती[1] निदेशे
परस्परोपग्रह[2]निर्विकारौ॥ १४॥

**राजा**—तेन हि मन्त्रिपरिषदं ब्रूहि। सेनान्ये वीरसेनाय लिख्यतामेवं क्रियतामिति।

**कञ्चुकी**—यदाज्ञापयति देवः। (इति निष्क्रम्य सप्राभृतकं लेखं गृहीत्वा पुनः प्रविश्य) अनुष्ठिता प्रभोराज्ञा। अयं पुनरिदानीं देवस्य सेनापतेः पुष्पमित्रस्य सकाशात्सप्राभृतको लेखः प्राप्तः। प्रत्यक्षीकरोत्वेनं देवः।

(राजा सहसोत्थाय प्राभृतकं सोपचारं परिगृह्य शिरसि कृत्वा परिजनायार्पयति। लेखं च नाट्येनोद्वेष्टयति।)

**देवी**—(आत्मगतम्) अह्महे, तदोमुहं एव्व मे हिअअं। सुणिस्सं दाव गुरुअणकुसलाणन्दरं पुत्तस्स वसुमित्तस्स उत्तन्दं। अदिभारे खु सेणावइणा णिउत्तो मे पुत्तओ।

---

संशयात्। एतद्वृत्तान्तोपक्षेपस्य फलमनयोः संभाषणेन दर्शितम्। **दर्शनमिति**॥ मतमित्यर्थः। **द्विधेति**॥ द्विधा विभक्तां श्रियं राज्यलक्ष्मीम् उद्वहन्तौ तौ नृपती यज्ञसेनमाधवसेनौ। नृपते इति च पाठः। द्विधा विभक्तां धुरं भारमुद्वहन्तौ रथाश्वाविव परस्परस्य उपग्रहेण उपयोगेन। परस्परानुग्रह इति च पाठः। निर्विकारौ परस्परबाधाशून्यौ सन्तौ संग्रहीतुः सारथेरिव ते तव निदेशे स्थास्यतः वर्तिष्येते। यथा रथाश्वौ नियामकस्य सारथेर्वशे तिष्ठतः नच परस्परं बाधेते रथभारं च वहतः तथा यज्ञसेनमाधवसेनावपि तव वशे तिष्ठन्तौ परस्परमबाधमानौ राज्यभारं वक्ष्यत इत्यर्थः। उपमालङ्कारः। उपजातिवृत्तम्। **तेन हीति**॥ मन्त्रिपरिषदोऽप्यनुमतं चेदित्यर्थः। अनेन तच्चित्तानुवर्तनं राज्ञो गम्यते। इति लिख्यतामित्यन्वयः। अथ राज्ञो धारिण्यादीनां च प्रीतिकरं वृत्तान्तान्तरमवसर उपक्षिपति—**कञ्चुकी पुनः प्रविश्येति**॥ आहेति शेषः। **सप्राभृतकः**

---

१. नृपते २. परस्परानुग्रह.

अहो, ततोमुखमेव मे हृदयम् । श्रोष्यामि तावद्गुरुजनस्य कुशलानन्तरं पुत्रस्य वसुमित्रस्य वृत्तान्तम् । अतिभारे खलु सेनापतिना नियुक्तो मे पुत्रकः ।

**राजा**—(उपविश्य वाचयति ।) स्वस्ति । यज्ञशरणात्सेनापतिः पुष्पमित्रो वैदिशस्थं पुत्रमायुष्मन्तमग्निमित्रं स्नेहात्परिष्वज्यानुदर्शयति । विदितमस्तु । योऽसौ राजयज्ञदीक्षितेन[1] मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य संवत्सरोपावर्तनीयो[2] निरर्गलस्तुरगो विसृष्टः, स सिन्धोर्दक्षिणे रोधसि चरन्नश्वानीकेन यवनानां निषिद्धः[3] । तत उभयोः सेनयोर्महानासीत्संमर्दः ।

(देवी विषादं नाटयति ।)

**राजा**—कथमीदृशं संवृत्तम् । (शेषं पुनर्वाचयति ।)

ततः परान्पराजित्य वसुमित्रेण धन्विना ।
प्रसह्य ह्रियमाणो मे वाजिराजो निवर्तितः ॥ १५ ॥

**देवी**—इमिणा दाणिं अस्ससइ मे हिअअं ।

अनेनेदानीमाश्वसिति मे हृदयम् ।

**राजा**—(लेखशेषं वाचयति ।) सोऽहमिदानीमंशुमतेव सगरः पौत्रेण

---

उपायनद्रव्यसहितः । शिरसिकृत्वेत्यन्तेन भक्तिविनयादयो गम्यन्ते । **उद्वेष्टयति** शिथिलबन्धनं करोति । अहो इति संभ्रमे आनन्दे वा । **ततोमुखं** ततो लेखे मुखमग्रं यस्य तत् लेखैकाग्रमित्यर्थः । लेखदर्शनोत्कण्ठितमित्यर्थः । **अतिभारे** यज्ञाश्वरक्षणरूपे गुरुणि कार्ये । **स्वस्तीत्यादि** ॥ लेखस्य प्रथमतः स्वस्तीति मङ्गलशब्दो लेखनीय इत्याचारः । **यज्ञशरणात्** यज्ञशालातः । वैदिशं विदिशानगरम् । **अनुदर्शयति** ॥ आत्मवृत्तान्तं कथयतीत्यर्थः । योऽसावित्यस्य तुरग इत्यनेन संबन्धः । **राजयज्ञदीक्षितेनेति** ॥ राजयज्ञोऽश्वमेधः । अश्वमेधेति च पाठः । वसुमित्रं गोप्तारमादिश्येति संबन्धः । संवत्सरेण उपावर्तनीयः प्रतिनिवर्तनीयः । निरर्गलः निष्प्रतिबन्धः । सः तुरगः सिन्धोः नदीविशेषस्य रोधसि तीरे अश्वप्रधानमनीकं सेना तेन निषिद्धः निवारितः । प्रार्थित इति पाठोऽप्युक्त एवार्थः । कथमिति वितर्के । अवितर्कितमिदमिति भावः ॥ **तत इति** ॥ ततः धन्विना एकधनुर्धरेण अनेन निवर्तनसामर्थ्यं द्योत्यते । वसुमित्रेण परान् शत्रून् पराजित्य प्रसह्य बलात्कारेण ह्रियमाणः । परैरिति शेषः । मे **वाजिराजः** अश्वरत्नं **निवर्तितः** प्रत्याहृतः । अत्र हर्षो भावः । पथ्यावक्त्रं वृत्तम् । **सोऽहमि-**

---

१. अश्वमेध २. वत्सरोपात्तनियमो ३. प्रार्थितः

प्रत्याहृताश्वो यक्ष्ये । तदिदानीमकालहीनं विगतरोषचेतसा भवता वधूजनेन सह यज्ञसेवनायागन्तव्यमिति ।

**राजा**—अनुगृहीतोऽस्मि ।

**परिव्राजिका**—दिष्ट्या पुत्रविजयेन दम्पती वर्धेते । (देवीं विलोक्य)

भर्त्रासि वीरपत्नीनां श्लाघ्यायां स्थापिता धुरि ।
वीरसूरिति शब्दोऽयं तनयात्त्वामुपस्थितः ॥ १६ ॥

**विदूषकः**—होदि परितुट्ठोह्मि पिदरं अणुजादो वच्छोत्ति ।
भवति, परितुष्टोऽस्मि पितरमनुजातो वत्स इति ।

**राजा**—मौद्गल्य, ननु कलभेन यूथपतिरनुकृतः ।

**कञ्चुकी**—

नैतावता वीरविजृम्भितेन
चित्तस्य नो विस्मयमादधाति ।

---

ति ॥ पौत्रेण अंशुमता प्रत्याहृताश्वः सगर इव पौत्रेण प्रत्याहृताश्वः सोऽहं यक्ष्य इति संबन्धः । सगरकथा रामायणप्रसिद्धा । **अकालहीनं** कालेन हीनं शून्यं न भवति यथा तथा । यथाकालमित्यर्थः । विगतः रोषः मद्विषयकः क्रोधः यस्य तत् चेतो यस्य तेन । अग्निमित्रानुमतिं विना तत्पुत्रस्य यज्ञीयतुरगरक्षाधिकारित्वे नियोगोऽत्र संभावितो रोषहेतुः बोध्यः । इतीत्यस्य विदितमस्त्विति पूर्वेण संबन्धः । **भर्त्रेति** ॥ भर्त्रा अग्निमित्रेण त्वं वीरः पतिः यस्याः सा वीरपत्नी वीरस्य पत्नी वा तासां श्लाघ्यायां धुर्यग्रे स्थापिता असि भवसि । असीति त्वमर्थकमव्ययं वा । तव पतिर्वीरवर्य इति भावः । वीरं सूत इति वीरसूः इत्ययं शब्दः तनयात् वसुमित्राद्धेतोः त्वामुपस्थितः । तव पुत्रोऽपि वीर इत्यहो त्वं धन्येति भावः । पथ्यावक्त्रं वृत्तम् ॥ कौशिक्याः धारिणीप्रशंसामाकर्ण्य विदूषको राजानं प्रशंसन्नाह—**भवतीत्यादि** ॥ भवतीति कौशिकीसंबोधनम् । परितुष्टास्मीति पाठे तु धारिण्युक्तिरियम् । **पितरमनुजातः** । सादृश्यवाची अनुशब्दः । शौर्यादिगुणैः सदृशो जातः इत्यर्थः । अनुसृत इति च पाठः । नात्र विस्मयः कार्य इत्याशयेनाह—**नन्विति** ॥ कलभेन गजबालेन यूथपतिः गजराजः अनुकृतः सदृशीकृतः । नन्वित्यामन्त्रणे प्रश्ने वा । अत्राप्रस्तुतप्रशंसा । **नैतावतेति** ॥ स इति शेषः । सः त्वत्पुत्र इत्यर्थः । एतावता शत्रुविजयपूर्वकतुरगप्रत्याहरणरूपेण वीरविजृम्भितेन वीरकर्मणा नः अस्माकं चित्तस्य विस्मयं न आदधाति करोति । कुत इत्यत्राह—

---

१. **देवी**—भअवदि परितुट्ठह्मि जं पिदरं अणुजादो मे वच्छओ २. **अणुसदो**
३. **देवी**—भगवति परितुष्टाऽस्मि यत्पितरमनुजातो मे वत्सकः ४. **अनुसृतः**

यस्याप्रधृष्यः प्रभवस्त्वमुच्चै-
रग्नेरपां दग्धुरिवोरुजन्मा ॥ १७ ॥

राजा—मौद्गल्य, यज्ञसेनस्यालमुररीकृत्य मुच्यन्तां सर्वे बन्धनस्थाः।

कञ्चुकी—यदाज्ञापयति देवः। (इति निष्क्रान्तः।)

देवी—जअसेणे, गच्छ। इरावदिप्पमुहाणं अन्देउराणं पुत्तस्स विअअउत्तन्दं णिवेदेहि।

जयसेने, गच्छ। इरावतीप्रमुखानामन्तःपुराणां पुत्रस्य विजयवृत्तान्तं निवेदय।

प्रतीहारी—तह। तथा। (इति प्रस्थिता।)

देवी—एहि दाव। एहि तावत्।

प्रतीहारी—(प्रतिनिवृत्य) इअह्मि। इयमस्मि।

देवी—(जनान्तिकम्) जं मए असोअदोहलणिओए मालविआए पडिण्णादं, तं से अहिजणं अ णिवेदिअ मह वअणेण इरावदिं अणुणेहि। तुए अहं सच्चादो ण विब्भंसिदव्वेत्ति।

यन्मयाशोकदोहदनियोगे मालविकायै प्रतिज्ञातम्, तदस्या अभिजनं च निवेद्य मम वचनेनेरावतीमनुनय। त्वयाहं सत्यान्न विभ्रंशयितव्येति।

प्रतीहारी—जं भट्टिणी आणवेदि। (इति निष्क्रम्य पुनः प्रविश्य) भट्टि-

---

यस्येति ॥ अपां जलानां दग्धुः दाहकस्याग्नेः। वह्नेरिति च पाठः। और्वाग्नेरित्यर्थः। ऊरुतो जन्म यस्य तथाभूतो मुनिविशेषः इव। यस्य पुत्रस्य उच्चैः महान् अप्रधृष्यः अन्यैः प्रधर्षयितुं पराभवितुमशक्यः। एते विशेषणे ऊरुजन्मन्यपि योज्ये। त्वं प्रभवः उत्पत्तिहेतुः। इतोऽप्यधिकं त्वदीयं वीरविजृम्भितं दृष्टवतो ममानेन न विस्मय इति भावः। उपमयाग्निमित्रस्य शान्तत्वादिकं वसुमित्रस्यातितेजस्वित्वादिकं च द्योत्यते। इन्द्रवज्रा वृत्तम्। संतोषावसरे कर्तव्यं यत्तदादिशति— मौद्गल्येति ॥ यज्ञसेनस्य स्यालः पत्नीभ्राता मौर्यनामा बन्धनस्थः प्रथमाङ्के प्रस्तुतः तमुररीकृत्य स्वीकृत्य तं विहायेति यावत्। सर्वे तदन्ये सर्वेऽपीत्यर्थः। यदित्यादि ॥ अशोकदोहदस्य नियोगे नियोगावसरे। तत्प्रतिज्ञातं तदभिजनं कुलं च निवेद्य उभयं निवेद्येत्यर्थः। अनुनय सान्त्वय। सान्त्वनेन संमतियुक्तां कुर्वित्यर्थः। इति मम वचनेनेति संबन्धः। इति मम वचनमुक्त्वेत्यर्थः। भट्टिनीति ॥ अन्तःपुराणाम् अन्तःपुरस्त्रीसंबन्धिनाम्। मञ्जूषा पेटिका।

---

१. वह्नेरपां.

णि, पुत्तविजअणिमित्तेण परितोसेण अन्देउराणं आहरणाणं मञ्जूसाम्हि संवुत्ता ।

यज्ञदत्तिन्याज्ञापयति । भट्टिनि, पुत्रविजयनिमित्तेन परितोषेणान्तःपुराणामाभरणानां मञ्जूषास्मि संवृत्ता ।

**देवी**—किं एत्थ अच्चरिअं । साहारणो खु ताणं मह अ अअं अब्भुदओ ।

किमत्राश्चर्यम् । साधारणः खलु तासां मम चायमभ्युदयः ।

**प्रतीहारी**—(जनान्तिकम्) भट्टिणि, इरावदी विण्णवेदि । सरिसं खु देवीए पहुवन्दीए । तुह वअणं पुढमसंकप्पिदं ण जुज्जदि अण्णहा कादुं ति ।

भट्टिनि, इरावती विज्ञापयति । सदृशं खलु देव्याः प्रभवन्त्यास्तव वचनं प्रथमसंकल्पितं न युज्यतेऽन्यथाकर्तुमिति ।

**देवी**—भअवदि, तुए अणुमदा इच्छामि अज्जसुमदिणा पुढमसंकप्पिदं मालविअं अज्जउत्तस्स पडिवादेदुं ।

भगवति, त्वयानुमतेच्छाम्यार्यसुमतिना प्रथमसंकल्पितां मालविकामार्यपुत्रस्य प्रतिपादयितुम् ।

**परिव्राजिका**—इदानीमपि त्वमेवास्याः प्रभवसि ।

**देवी**—(मालविकां हस्ते गृहीत्वा) इदं अज्जउत्तो पिअणिवेदणाणुरूवं पारितोसिअं पडिच्छदु ।

इदमार्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छतु ।

(राजा सव्रीडं जोषमास्ते ।)

---

विज्ञापनप्रकारमाह—**सदृशमिति** ॥ प्रभवन्त्यास्तव वचनं सदृशं खलु युक्तमेव । वचनप्रकारमाह—**पूर्वेति** ॥ प्रथमसंकल्पितमन्यथाकर्तुं न युज्यत इति वचनमिति संबन्धः । इतीत्यध्याहारेण इति विज्ञापयतीत्यर्थो बोध्यः । यद्वा सदृशं खल्वित्यत्र हेतुमाह—**प्रथमेति** ॥ इतीति हेतौ । **भगवतीति** ॥ अहं त्वया अनुज्ञाता सती प्रथमसंकल्पितां पूर्वमेव दातुं मनसा निरूपिताम् । **आर्यपुत्रस्य** राज्ञ इत्यर्थः । **प्रतिपादयितुं** दातुम् । **इदानीमपीति** ॥ न मदनुमतिरपेक्षणीयेति भावः । अनेन वचनेन लब्धानुमतिः राजानमाह—**आर्यपुत्रेति** ॥ इदं मालविकारूपं प्रियनिवेदनस्य पुत्रविजयकथनस्य अनुरूपं सदृशम् । अत्र प्रीत्युत्पादनात् प्रसादो नाम संध्यङ्गम् । जोषस्थित्यावधीरणमाशङ्क्याह— **किमिति** ॥ **अवेक्षत इति** ॥ धारिण्या दत्तदेवीशब्दामिमां परिग्रहीतुमिच्छामीति वीक्षणाभिप्रायः । तमवंग-

**देवी**—(सस्मितम्) किं अवधीरेदि मं अज्जउत्तो ।

**किमवधीरयति मामार्यपुत्रः ।**

**विदूषकः**—भोदि, एसो लोअव्ववहारो । सव्वो वि णववरो लज्जादुरो होदित्ति ।

**भवति, एष लोकव्यवहारः सर्वोऽपि नववरो लज्जातुरो भवति ।**

(राजा विदूषकमवेक्षते ।)

**विदूषकः**—अह वा देवीए एव्व किदप्पणअविसेसं दिण्णदेवीसद्दं मालविअं अत्तभवं पडिग्गहीदुं इच्छदि ।

**अथ वा देव्यैव कृतप्रणयविशेषां दत्तदेवीशब्दां मालविकामत्रभवान्प्रतिग्रहीतुमिच्छति ।**

**देवी**—एदाए राअदारिआए अहिजणेण एव्व दिण्णो देवीसद्दो । किं पुणरुत्तेण ।

**एतस्या राजदारिकाया अभिजनेनैव दत्तो देवीशब्दः । किं पुनरुक्तेन ।**

**परिव्राजिका**—मा मैवम् ।

**[1]अप्याकरसमुत्पन्ना मणिजातिरसंस्कृता ।**
**जातरूपेण कल्याणि न हि संयोगमर्हति ॥ १८ ॥**

**देवी**—(स्मृत्वा) मरिसेदु भअवदी । अब्भुदअकहाए उइदं ण लक्खिदं । जअसेणे, गच्छ दाव । कोसेअपत्तोण्णजुअलं उवणेहि ।

**मर्षयतु भगवती । अभ्युदयकथयोचितं न लक्षितम् । जयसेने, गच्छ तावत् । कौशेयपत्त्रोर्णयुगलमुपनय ।**

---

त्याह—**अथवेति** ॥ अथवेति लज्जातुरत्वपक्षप्रतिक्षेपे । **अभिजनेन** कुलेन । **मा मैवमिति** ॥ वदेति शेषः । कुत इत्यत्राह—**अपीति** ॥ हे कल्याणि शोभने । सर्वमपि संस्कर्तुमर्हसीति संबुद्ध्या द्योत्यते । आकरे विशिष्टरत्नोत्पत्तिस्थले समुत्पन्ना सम्यगुत्पन्ना । अपीति जन्मनोत्कर्षं द्योतयति । अत एवाह—**मणिजातिरिति** ॥ विशिष्टजातिर्मणिरित्यर्थः । **असंस्कृता** शाणोत्तेजनादिसंस्कारमप्रापिता सती **जातरूपेण** सुवर्णेन संयोगं न ह्यर्हति किंतु संस्कृतैवार्हतीत्यर्थः । सादृश्यनिमित्ताप्रस्तुतप्रशंसा । महाकुलीनापीयं सुन्दरी त्वया देवीशब्दादिना संस्कृतैव राज्ञानेन सङ्गममर्हतीति भावः । अनुष्टुप् छन्दः । अत्र लब्धार्थस्य स्थिरीकरणात्कृतिर्नाम संध्यङ्गम् । तदनुमन्वानाह—**मर्षयत्विति** ॥ मर्षयतु क्षमताम् । अत्र हेतुमाह—

---

1. अप्याकरसमुत्पन्नो रत्नजातिरसंस्कृतः । जातरूपेण कल्याणि स हि संयोगमर्हति ॥

प्रतीहारी—जं देवी आणवेदि । (इति निष्क्रम्य पत्त्रोर्णे गृहीत्वा पुनः प्रविश्य) देवि, एदम् ।

यद्देव्याज्ञापयति । देवि, एतत् ।

देवी—(मालविकामवकुण्ठ्य) दाणिं अज्जउत्तो पडिच्छदु ।

इदानीमार्यपुत्रः प्रतीच्छतु ।

राजा—देवि, [1]त्वच्छासनादप्रत्युत्तरा वयम् ।

परिव्राजिका—हन्त, प्रतिगृहीता ।

विदूषकः—अह्मो देवीए अणुऊलदा । अहो देव्या अनुकूलता ।

(देवी परिजनमवलोकयति ।)

परिजनः—(मालविकामुपेत्य) जेदु भट्टिणी । जयतु भट्टिनी ।

(देवी परिव्राजिकां निर्वर्णयति ।)

परिव्राजिका—नैतच्चित्रं त्वयि । कुतः ।

प्रतिपक्षेणापि पतिं सेवन्ते भर्तृवत्सलाः साध्व्यः ।
[2]अन्यसरितां शतानि हि समुद्रगाः प्रापयन्त्यब्धिम् ॥ १९ ॥

(प्रविश्य)

निपुणिका—जेदु भट्टा । इरावदी विण्णवेदि । जं उवआरादिक्कमेण तदा भट्टिणो अवरद्धं, तं सअं एव्व भट्टिणो अणुऊलं

अभ्युदयेति ॥ उत्सवे हि प्रायः सर्वोऽपि जनः प्रमाद्यति । लक्षितं विचारितम् । कौशेयं कृमिकोशोत्थं पत्त्रोर्णं धौतवस्त्रं तद्युगलमित्यर्थः । पत्त्रोर्णे गृहीत्वेति पाठः । हन्तेति हर्षे । प्रतिगृहीता स्वीकृता राज्ञा मालविकेति च शेषः । अत्र वाञ्छितावाप्तेरानन्दो नाम संध्यङ्गम् । अहो इत्याश्चर्ये । अनुकूलता पतिहिताचरणम् । धारिणीविलोकनाभिप्रायमवगत्य परिजन आह—जयत्विति ॥ अत्र बहुमानप्राप्तेः भाषेति संध्यङ्गम् । निर्वर्णयतीति ॥ ननु सिद्धं युष्माकमभीष्टं किमतः परं मया कर्तव्यमिति निरीक्षणाभिप्रायः । देवीं भङ्ग्यन्तरेण श्लाघते— नैतदिति ॥ त्वयीत्यर्थान्तरसंक्रमितवाच्यम् । भर्तृभक्तिसौशील्यादिगुणातिशयशालिन्यां भवत्यामित्यर्थः । एतन्मालविकाप्रदानेन भर्तृसेवनं न चित्रं कर्तव्यत्वान्न विस्मयकरम् । उक्तमुपपादयति—प्रतीति ॥ भर्तुः वत्सलाः स्निग्धाः मनोऽनुकूला इति यावत् । साध्व्यः पतिव्रताः स्त्रियः प्रतिपक्षेण सपत्नेन स्त्रीजनेन अपीति विरोधे पतिं सेवन्ते प्रीणयन्ति । अत्र दृष्टान्तमाह—अन्येति ॥ समुद्रं गच्छन्तीति समुद्रगाः नद्यः अन्यसरितां शतानि अब्धिं समुद्रं प्रापयन्ति आत्मना सह प्रवेशयन्ति ।

1. त्वच्छासनात्प्रवृत्ता एव वयम् 2. अन्यसरितामपि जलं समुद्रगाः प्रापयन्त्युदधिम्

णाम मए आअरिदं। संपदं पुण्णमणोरहेण भत्तुणा पसादमेत्तेण संभावइदव्वात्ति।

जयतु भर्ता। इरावती विज्ञापयति। यदुपचारातिक्रमेण तदा भर्त्रे अपराद्धं, तत्स्वयमेव भर्तुरनुकूलं नाम मयाचरितम्। सांप्रतं पूर्णमनोरथेन भर्त्रा प्रसादमात्रेण संभावयितव्येति।

**देवी**—णिउणिए, अवस्सं ताए संदेसं सेविदुं अज्जउत्तो जाणिस्सदि।

निपुणिके, अवश्यं तस्याः संदेशं सेवितुमार्यपुत्रो ज्ञास्यति।

**निपुणिका**— १जं देवी आणवेदि। यद्देव्याज्ञापयति।

(इति निष्क्रान्ता।)

**परिव्राजिका**—देव, अहमनुना युक्तसंबन्धेन चरितार्थं माधवसेनं सभाजयितुमिच्छामि यदि मे तव प्रसादः।

**देवी**—भअवदि ण जुत्तं अह्मे परिच्चत्तुं।

भगवति, न युक्तमस्मान्परित्यक्तुम्।

**राजा**—भगवति, मदीयेषु लेखेषु तत्रभवतस्त्वामुद्दिश्य सभाजनाक्षराणि पातयिष्यामि।

**परिव्राजिका**—युवयोः स्नेहेन परवानयं जनः।

**देवी**—आणवेदु अज्जउत्तो, किं भूओ वि पिअं अणुचिट्ठामि।

आज्ञापयत्वार्यपुत्रः, किं भूयोऽपि प्रियमनुतिष्ठामि।

---

इति प्रसिद्धौ। दृष्टान्तसंकीर्णोऽर्थान्तरन्यासः। आर्या वृत्तम्। अथावसरे इरावत्याः प्रीतिमपि निवेदयति—**इरावती विज्ञापयतीत्यादि**॥ **उपचारातिक्रमेण** भर्तृप्रणिपातलङ्घनेन। अपराद्धमित्यत्रापि मयेत्यस्य संबन्धः। तदुपचारातिक्रमणं मया आचरितम् भर्तुरनुकूलमिति संबन्धः। तदनुकूलं परिणतमित्यर्थः। मालविकासमागमे मत्प्रतिबन्धनिवृत्तेरिदानीं तल्लाभाच्चेति भावः॥ **प्रसादमात्रेण** अनुग्रहमात्रेण **संभावयितव्या** संमाननीया। **निपुणिक इति**॥ तस्या इरावत्याः संदेशं वाचिकं प्रार्थितमिति यावत्। **देवेति**॥ **सभाजयितुम्** आनन्दयितुम्। **तव प्रसाद इति**॥ गमनानुमतिरित्यर्थः। **भगवति मदीयेष्विति**॥ **तत्रभवतः** माधवसेनस्येत्यर्थः। तं प्रति प्रेषयिष्यमाणेषु लेखेष्वित्यर्थः। **पातयिष्यामि** निवेशयिष्यामि। **युवयोरित्यादि**॥ अतोऽद्य न गच्छामीति भावः।

---

१. अणुग्गहीदह्मि। अनुगृहीतास्मि।

राजा—किमतः परमपि प्रियमस्ति । तथापीदमस्तु ।

त्वं मे प्रसादसुमुखी भव चण्डि नित्य-
मेतावदेव वरये प्रतिपक्षहेतोः ।

(भरतवाक्यम् ।)

आशास्यमीतिविगमप्रभृति प्रजानां
संपत्स्यते न खलु गोप्तरि नाग्निमित्रे ॥ २० ॥

(इति निष्क्रान्ताः सर्वे ।)

॥ इति श्रीकालिदासस्य कृतौ मालविकाग्निमित्रे पञ्चमोऽङ्कः ॥

॥ नाटकमिदं संपूर्णम् ॥

---

**आज्ञापयत्विति** ॥ तदिति शेषः । किं प्रियमनुतिष्ठामि तदाज्ञापयेत्यर्थः । **किमिति** ॥ किमस्ति, नास्तीत्यर्थः । **त्वमिति** ॥ हे चण्डि अतिकोपने । वक्ष्यमाणवरणे हेतुरियं संबुद्धिः । त्वं मे प्रसादेन चित्तनैर्मल्येन सुमुखी प्रसन्नमुखी नित्यं भव । एतावदेव वरये प्रार्थये । **प्रतिपक्षहेतोः** सपत्नीजनमुद्दिश्य । ननु प्रजार्थं किमपि कुतो न प्रार्थ्यत इत्यत्राह—**आशास्यमिति** ॥ प्रजानाम् ईतीनामनावृष्ट्यादिपीडानां विगमः अपगमनं प्रभृति यत्र तत् आशास्यमभिलषणीयं वस्तु अग्निमित्रे शौर्यौदार्यादिगुणविशिष्ट इत्यर्थान्तरसंक्रमितम् **गोप्तरि** रक्षके सति **न खलु संपत्स्यते न** । संपत्स्यत एवेत्यर्थः । अत्र प्रशस्तिर्नाम संध्यङ्गम् । काव्यलिङ्गमलङ्कारः । वसन्ततिलकं वृत्तम् । इति सर्वं शिवम् ॥

बिरुदं यः सहृदयतिलकं प्राप्तवान् प्रभोः ।
मात्रभूपात्स रामाख्यः षारकः कृतवानिमाम् ॥
**साधूनां** को नु कोळम्बो विना यं पुरुषोत्तमम् ।
तत्पादयोरर्पितेयं दीपिका दृश्यतां बुधैः ॥

॥ इति सहृदयतिलकोपाख्यरामषारकविरचिता सारार्थदीपिकाव्याख्या समाप्ता ॥

---

१. देवि २. हृदये प्रतिपालनीयम्; मृगये प्रतिपक्षहेतोः ३. आशास्यमभ्याधिगमात्प्रभृति.

## ॥ श्लोकसूची ॥

श्रीबालमनोरमा प्रेस् मैलापूर् मद्रास्